योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 272 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 27 जुलाई 2021 मंगलवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

सेवितव्यो महावृक्षः
फ़लच्छाया समन्वितः।
यदि देवाद फलं नास्ति,छाया
केन निवार्यते॥

अर्थ – एक विशाल वृक्ष की सेवा करनी चाहिए। क्योंकि वह फल और छाया से युक्त होता है। यदि किसी दुर्भाग्य से फल नहीं देता तो उसकी छाया कोई नहीं रोक सकता है।

### संक्षिप्तवार्ताः

## देहल्यां प्लास्टिक प्रदूषणस्य अपायः सवंर्धितः

**नवदेहली।** देहल्यां प्लास्टिक प्रदूषणस्य अपायः सवंर्धितः, त्रिषुनिगमेसु एकस्मिन्नपि प्लास्टिक शोधकं संयंत्रम् नैवविद्यते। उत्तरी एमसीडी इत्यस्य महापौरः जय प्रकाशः उक्तवान् यत् उत्तरी एम सी डी क्षेत्रात् निष्कासितं प्लास्टिकं अवकरंमलस्वा लैंडपिफल साइटइत्यत्र यंत्र माध्यमेन सामान्य अवकरैः पृथक कृत्य शक्तिसंयंत्रं प्रेषणं आकार्यते परंच समयेन सह अस्मिन् विस्तारं अपेक्षते।



## प्रतिदिनम् एकहोरात्मिका भवति आभासिकी कक्षा, सामाजिकवृत्तिवर्गजनाः अपि संस्कृतम् अधिगन्तुम् उत्साहिनः

# उत्तरप्रदेशे वर्धिता संस्कृतम् अधिगन्तुं रुचिः, अष्टसहस्राधिकजनाः कुर्वन्ति ऑनलाइनकक्षाम्




**लखनऊ।** उत्तरप्रदेशे संस्कृत भाषाम् उन्नेतुं प्रदेश सर्वकारस्य अभियानम् उन्नतिम् आनयति। विशेषतया युवसु संस्कृतभाषाम् अधिगन्तुं उत्साहः वर्धितः वर्तते । उत्तरप्रदेश संस्कृत संस्थानेन आरब्ध संस्कृत भाषा शिक्षणेन संस्कृतं पाठयितुम् अभियानं बहु प्रभावोत्पादकं सिद्धः भवति । केवलं एकस्मिन् मासे अष्ट सहस्राधिक जनैः संस्कृतस्य आभासि कक्षासु स्वकीयं पञ्जीकरणं कारितम्। संस्थानपक्षतः प्रतिदिनम् एकहोरात्मिका संस्कृतकक्षा सञ्चाल्यते ।
उत्तरप्रदेश संस्कृत संस्थान पक्षतः संस्कृतं वक्तुं, पठितुम्, अधिगन्तुं च इच्छुकेभ्यः जनेभ्यः संस्कृत भाषा शिक्षणस्य सुविधा आरब्धा। सर्वतोविशिष्टा वार्ता एषा अस्ति यत् संस्कृतम् अधिगन्तुम् इच्छुकाः दूरवाणीसङ्ख्यां प्रति 9522340003 मिसकॉल एलर्ट माध्यमेन आभासि कक्षायां स्वकीयं पञ्जीकरणं कारयितुं शक्नुवन्ति। अनया सुविधया संस्थानाय अधिकः लाभः अपि प्राप्तः।
वृहद्सङ्ख्यासु युवभिः छात्रैः मिसकॉलमाध्यमेन स्वकीयं पञ्जीकरणं आभासिकक्षाभ्यः कारितम्। अस्मिन् जुलाईमासे 8533सङ्ख्यकैः छात्रैः संस्कृतम् अधिगन्तुम् इच्छुकैः जनैश्च स्वकीयं पञ्जीकरणं कारितम् अपि च ते नियततया कक्षां कुर्वन्ति । संस्थानानुसारम् आभासिमाध्यमेन संस्कृतम् अधिगन्तुम् इच्छुकेभ्यः जनेभ्यः सप्तचत्वारिंशत्कक्षाणां सञ्चालनं क्रियते। एतेषु शिक्षकैः ऑनलाइनसंस्कृतस्य पाठशाला स्थाप्यते । संस्थानानुसारं संस्कृतम् अधिगन्तृषु युवावर्गस्य सङ्ख्या अधिका अस्ति। शिक्षकाः प्रतिदिनं एकहोरात्मकाम् आभासि कक्षां पाठयन्ति, याः पूर्णरूपेण निःशुल्कं सन्ति।

## उत्तरप्रदेश संस्कृत संस्थानेन आरब्धं प्रथमस्तरीय संस्कृत भाषा शिक्षणम्




## उत्तरप्रदेश सर्वकारः निरन्तरं देवभाषां संस्कृतं प्रति रुचिम्



उत्तरप्रदेश सर्वकारः निरन्तरं देवभाषां संस्कृतं प्रति रुचिम् आनेतुं संस्कृतम् अधिगन्तुं च इच्छुकेभ्यः जनेभ्यः अवसरं प्रदातुं संलग्नः अस्ति। अस्मिन् उत्तरप्रदेशसंस्कृतसंस्थानेन वृहतीं भूमिकां निर्वहति। संस्थानस्य अध्यक्षेण डॉ. वाचस्पति मिश्रेण उक्तं यत् बहवः जनाः संस्कृतम् अधिगन्तुम् इच्छन्ति। विशेषतया वृत्तिवर्गाणां, चिकित्सकानाम्, अभियन्तणां, व्यापारिणां च समयाल्पताम् उद्दिश्य एषः प्रकल्पः चिन्तितः। तन्निमित्तम् एतत् सेवायाः वरदानभूतम्। अनेन संयुज्य तत्रैव संस्कृतभाषाशिक्षणस्य पठनस्य च निःशुल्कं प्रशिक्षणं प्राप्तुं शक्यते।

## तेनोक्तं यत् पञ्जीकरणाय अभ्यर्थिभिः केवलम् एकं गूगल–आवेदनं पूरिष्यते

तेनोक्तं यत् पञ्जीकरणाय अभ्यर्थिभिः केवलम् एकं गूगल–आवेदनं पूरिष्यते । आवेदने तेभ्यः स्वकीयव्यवसायस्य, वृत्तेः पठनस्य च सूचना प्रदास्यते । अस्यानन्तरं व्यवसायानुरूपं समूहमाध्यमेन अस्मिन् संस्कृतस्य पाठनं कारयिष्यते । तेनोक्तं यत् संस्कृतपठितुम् इच्छुकच्छात्रेभ्यः संस्कृतज्ञानेन च सहैव नैतिकसंस्कारणां विषये सूचना प्रदास्यते । हिन्द्या, आङ्गलेन च सह छात्रेभ्यः संस्कृते वक्तुम् अपि शिक्षयिष्यते ।




## मैरीकामः स्व ओलम्पिक अभियानस्य भव्यतमः समारम्भः कृतवान्

### डोमिनिका गणराज्यस्य मिगुएलिनाहर्नां डिजगार्सिया 4-1 सहपराजितः



**नवदेहली।** सर्वश्रेष्ठः भारतीय मुष्टि योद्धा एमसी मैरीकामः स्व ओलम्पिक अभियानस्य भव्यतमः शुभारम्भः कुर्वन् अग्रिमे चक्रे स्थानं सरंक्षितम्। रविवासरे 51 किलोउड्डीयभारः श्रेण्याः चक्रस्य 32 इत्यस्य समक्षे स डोमिनिकागणराज्यस्य मिगुएलिनाहर्नांडिजगार्सियां 4-1 इत्यनेन पराजितं चकार। मैरी कामस्य अग्रिमा प्रतिस्पर्धा 29 जुलाई इत्यस्यां तारिकायां भविष्यति। साकोलम्बियायाः तृतीयया श्रेष्ठता प्राप्तयावालेंसिया विक्टोरियया मुष्टि प्रहारं करिष्यति।

## श्रावणस्य स्वागते सज्जीभूता शिवालयाः, हर हरमहादेवस्य अनुगूंजः

**प्रयागराजः। वार्ताहरः।** मनकामेश्वर मन्दिरे आनलाइन मपि भविष्यति रूद्राभिषेकः

**श्रावणस्य सोमवासराणां तिथयः**
**प्रथम सोमवारः- 26 जुलाई**
**द्वितीय सोमवारः- 2 अगस्तः**
**तृतीय सोमवारः- 9 अगस्तः**
**चतुर्थसोमवारः- 16 अगस्तः।**

देवाधिदेवं भगवन्तं महादेवं समर्पितः श्रावण मासः रविवासरतः प्रारभ्यते। एक मास पर्यन्तं शिवालयेसु हरहर महादेवस्य अनुगूंजं भविष्यति। कोरोना निर्देशानुसारेण भक्तः अर्चना पूजनं च करिष्यन्ति। श्रावणस्य द्वितीय दिवसे एव मासस्य प्रथमः सोमवारः आगतः। मनकामेश्वर महादेव, तक्षकेश्वर तीर्थः-पीठ, शिवकुटी महादेव, सोमेश्वर महादेवः, नागवासुकि मंदिरं, शंकर विमान मण्डपम् च सर्वत्रैव भक्तानां पंक्तयः सुशोभिताः अभवन्। अयं श्रावण मासः भक्तेभ्यः अयंअति शुभमयः भविष्यति।



## डॉ नरेन्द्र महाभागस्य प्रयाग गौरव सम्मानं प्रदत्तम्

**प्रयागराजः। वार्ताहरः।** श्रीमद् आर्यावर्त विद्वत् परिषद् अथ च वायोवेद शोध संस्थानयोः तत्वावधाने एक संगोष्ठी वायोवेद शोध संस्थानस्य सभागारे समायोजिता। समारोहेऽस्मिन् आर्यावर्त विद्वत्परिषद् पक्षतः पूर्वंच शिक्षामंत्रिणं नरेन्द्र कुमार सिंह गौरं प्रयाग गौरव सम्मानेन सम्मानितं कृतवान्। अध्यक्षः डॉ रामजी मिश्रः उक्तवान् यत् यस्मिन् समाजे मनीषिणां सम्मानं भवति स समाजं उन्नतेः पथि अग्रसरो भवति। अवसरेऽस्मिन् एजी ब्रदर हुडस्य पूर्व उपाध्यक्षः पं हरि शंकर तिवारी स्व विचारं प्रस्तुतवान्। कार्यक्रमस्य संचालनं डॉ रवि कुमार मिश्रः आभार ज्ञापनं च वायोवेदस्य निदेशकः डॉ बीके द्विवेदि चक्रतुः ।

## प्रधानमंत्री नरेन्द्रमोदी स्व रेडियो कार्यक्रमेमनस्य वार्ता इत्यनया माध्यमेन राष्ट्रेण संवादं अकरोत्



### मोदीमनस्य वार्ता

**नवदेहली।** राष्ट्रगोनापरि अद्भुतं उपक्रमं इत्यस्मात् आदाय अमृत महोत्सव पर्यन्तम् कोरोना सतर्कता अपेक्षिता। प्रधानमंत्री नरेन्द्रमोदी स्व रेडियो कार्यक्रमेमनस्य वार्ता (मन की बात) इत्यनया माध्यमेन राष्ट्रेण संवादं अकरोत्। स अस्मिन् मध्ये टोक्योगत वद्धयः भारतीय क्रीडकेभ्यः शुभकामना सहितेन अन्येसु प्रकरणे सुवार्ता कृतवान्। प्रधानमंत्री मोदीजनान् जागृतवान् यत् त्यौहारेषु मध्ये इदम् न विस्मरेत् यत् कोरोना विषाणु अस्माकं मध्यतः न गतवान् अत एव आवश्यकमिदं यत् कोरोना विषयकान् निर्देशान् परिपालयेयुः। तेनोक्तं यत् स्वतंत्रतायाः 75 वर्षाणि पूर्णे जाते अस्माकं गर्वस्य अनुभूतिः भवति।

## उत्तर प्रदेशस्य कारागृहेषु क्षमताऽपेक्षया 1-8 गुणितं अधिकाः बन्दी जनाः

### आरटी आई माध्यमेन उद्घाटनं जातम्

**लखनऊ।** उत्तर प्रदेशस्य कारागृहेषु क्षमताऽपेक्षया 1-8 गुणितंअधिकाः बन्दीजनाः। आरटीआई माध्यमेन उद्घाटनं जातम्। एक्टिविस्ट संजयं प्रदत्ता सूचनानुसारेण उत्तर प्रदेशस्य कारागारेसु 54397 पुरूष बन्दी जनानां आवास व्यवस्था अस्ति, यदापिसम्प्रति 23841 सिद्धदोषभाजाः 77509 च विचाराधीनाः पुरूष बन्दीजनाः कारागृहेसु प्रतिबन्धिता सन्ति। इत्थं रूपेण उत्तर प्रदेशस्य कारागृहेषु 3219 महिलाबन्दी जनानां व्यवस्था वर्तते यदाअपि इदानीं 1001 सिद्धदोषाः 3596 च विचाराधीनाः महिला बन्दीजनाः कारागृहेषु प्रक्षिप्तासन्ति।

## सम्पादकीयम्

### आत्मानं प्रेम्णिसंयोजयन्तु

आत्मानं प्रेम्णिसंयोजयन्तु तर्हि स्वतः सर्वंकुशलं भविष्यति। भये सावधानतायां च सतर्कतां एव वृण्वन्तु। काननेवनात् भयभीताः जनाः एव हन्यन्ते सतर्कतां कुर्वतः च निर्गच्छन्ति। एतादृगेव संक्रामक रोगेषु कस्यांचित् अन्यासु आपदासु ये भयभीता भवन्तिते उद्विग्नाः भवन्ति ये च सतर्काः सावधानाः भवन्तिते स्वयं संरक्षयन्ति अपरेभ्यः चापि साहसं ददति। स्थितिः कियती एव विषमा अस्तु मस्तिष्कस्य पार्श्वे सावधानतायाः विकल्पः भवति। परंच ये अस्मिन् विभ्यति भयाक्रान्ताः व कुर्वन्ति तेपरिस्थितिं दुर्दशायां आक्षिप्यन्ते। द्रष्टव्य मिदं यत् ते के सन्ति ये अस्माकं प्रारम्भ कालादेव पूर्वसूचयन्तिस्म अपरतश्चते के सन्ति ये निशंक भावेन स्व लक्ष्ये निरताः सन्ति। अत एव मनांसिसु दृयन्तु, तनुं संरक्षयन्तु, आत्मानं प्रेम्णिसंयोजयन्तु। सर्वंकुशलं भविष्यति।

# ‘ईश्वर अंश जीव अविनाशी चेतन अमल सहज सुखराशि’

अन्धकारनाशाय आलोकस्य आवश्यकता यथा अनुभूयते तथैव मानवजीवने लोकोत्तरानन्दप्राप्तये सङ्गीतस्य महती आवश्यकता विद्यते। यथा भवभूतिना उक्तम् ‘साहित्यसङ्गीतकलाविहीनः, साक्षात्पशुः पुच्छविषाणहीनः’ अर्थात् यस्य जीवने सङ्गीतकला नास्ति तस्य जीवनं व्यर्थमेव प्रतिभाति। अतः ‘कं सुखमलातीतिकला’ अनया व्युत्पत्तया एवं प्रतीयते यत् मनुष्यजीवने सुखस्याधारो कलैव अस्ति। यस्य जीवने कला नास्ति सः पशुवत् जीवनं यापयति। मनुष्यजीवनं समुज्ज्वलं स्यादेतदर्थं कुत्रचित षोड़शकलानाम् चतुषष्टिः कलानाञ्चवर्णनं प्राप्यते। ललितविस्तारे चतुरशीतिः कलानाम् वर्णनम् अक्रियत्। ‘ईश्वर अंश जीव अविनाशी चेतन अमल सहज सुखराशि’ अस्याम् पृथिव्याम् मानवाः भावाभिव्यक्तये ध्वनेः प्रयोगम् अकुर्वन्। क्रमेण सैव ध्वनिः नादशब्देन व्यवहृतः। सैव नादः शब्दरूपेन परिणतो भूत्वा अर्थस्य ग्रहणम् कृतः। तदा शब्दार्थौ सम्मिल्य कवयः वाक्व्यवहारं कृतवन्तः। पुनश्च अयमेव वाक्व्यवहारः भाषाकाव्यसाहित्यसङ्गीतमाध्यमेन मनुष्यान् मनोरञ्जितः। अयमेव मानवसंस्कृतेः उपादानमस्ति। नद्यते इति नादः। न-कार शब्देन प्राणसङ्गकः द-कार शब्देन अग्निसङ्गकः इति अववोध्यते। प्राणाग्नयोः समुद्भूत एषः नादः। आहतानाहतभेदाभ्यां नादः द्विविधः। आहतनादेव सङ्गीतस्य व्युत्पत्तिकारकः। पुरातत्त्वानुसारेण सङ्गीतकलाया उद्भवः स्वयम्भूः परमेश्वरात् अभवत्। नटराजशिवेव नृत्यकलायाः आदिस्रोतमस्ति। भगवती सरस्वती गीतवाद्यकलयोः स्रष्टा। यद्यपि नाट्यशास्त्रानुसारेण ब्रह्मैव सङ्गीतकलायाः जनकः वर्तते। अस्मिन् शोधप्रबन्धे सङ्गीतकला संस्कृतसाहित्ये कथं विद्वद्भिः विचारितः। तदेव अनुसृत्य किञ्चित् उच्यते सङ्गीत इति शब्दस्य व्युत्पत्तिः एवम् क्रियते। सम्यक् गीयते इति सङ्गीतः। यथा उक्तं सङ्गीतरत्नाकारेण ‘गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते’। गीतं नाटकस्याङ्गामितिनाट्य शास्त्रकारेणोक्तम् तस्यानुगामी वादनं नर्तनं च। मनुसंहितायाम् सङ्गीतरत्नाकरे अमरकोषे च ‘तौर्यत्रिक’ शब्दस्य व्यवहारम् नृत्यगीतादि स्थाने दरीदृश्यते। अर्थशास्त्रे विष्णुपुराणे बौद्धजैनग्रन्थेऽपि च सङ्गीतशब्देन गीतं वाद्यं नृत्यं त्रयं च अवबोध्यते। वायुपुराण नाट्यशास्त्ररामायणमहाभारतप्रभृतिषु ग्रन्थेषु गान्धर्वविद्या रूपेण सङ्गीतं व्यवहृतम्। सङ्गीतम् विश्वसंस्कृतेः उपादानम्। विश्वशान्तिस्थापनाय सभ्यतासंस्कृत्ययोः संरक्षणाय सङ्गीतं अद्वितीय मुपादानमिति। अस्य सङ्गीतस्य विभिन्नानि रूपाणि संस्कृतसाहित्ये परिदृश्यन्ते।

अस्मिन् शोधप्रबन्धे-

(क) सङ्गीतस्वरूपविमर्शः। (ख) सङ्गीतस्योपजीव्यत्वम्।

(ग) संस्कृतसाहित्ये सङ्गीतस्य प्रयोगोपयोगश्च। (घ) व्यवहारिकजीवने सङ्गीतस्योपयोगित्वम्।

इति विषयविचारः प्रस्तूयते।

संस्कृतसाहित्ये सङ्गीतकलाविमर्शः

कलाविद्या देवीचक्रमात्मिका सेयम्।

विदिता येन स मुक्तो भवति महात्रिपुरसुन्दरीरूपः। ‘का नाम कला’ इत्यत्र प्रतीच्चः प्रधीवरो बैडले वदति ‘‘कला वस्तुनो हि स्वकीया आकृतिर्यया सुघटिता भूत्वा प्रत्यक्षी भवति सा सुघटितयथार्थ वैशिष्ट्याभिव्यञ्जनकारिणी क्षमता ‘कला’ इत्यनेन नाम्ना प्रोक्ता भवति।’’ अतः ‘कं सुखं लातीति कला’ - अनया व्युत्पत्या एवं प्रतीयते यत् मनुष्यजीवने सुखस्याधारः कलैव अस्ति। यस्य जीवने कला नास्ति स पशुवत् जीवनं यापयति। कला परमानन्दस्य प्राप्तेः साधनमस्ति। यथोच्यते ‘‘लीयते परमानन्देययात्मा सा परा कला3’’ मनुष्यजीवनं समुज्ज्वलं स्यादेतदर्थं कुत्रचित् षोड़शकलानाम् चतुःषष्टिकलानाञ्च वर्णनं प्राप्यते। ललितविस्तारे चतुरशीतिकलानाम् वर्णनम् अक्रियत।

कलाः सन्ति यद्यपि बहुविधाः परं तत्र पञ्चकलाः ललितकलाः इत्येतया संज्ञया सन्ति प्रसिद्धाः। ताः सन्तीमाः - (1) स्थापत्यकला, (2) मूर्तिकला, (3) चित्रकला, (4) सङ्गीतकला, (5) काव्यकला चेति।

सङ्गीतकारा यया कलाया संसारं प्रमोदयन्ति सैव सङ्गीतकलेति कीर्त्यते। अन्धकारनाशाय आलोकस्य आवश्यकता यथा अनुभूयते तथैव मानवजीवने लोकोत्तरानन्दप्राप्तये सङ्गीतस्य महती आवश्यकता विद्यते। यथा भर्तृहरिणा उक्तम् - ‘साहित्यसङ्गीतकलाविहीनः, साक्षात्पशुः पुच्छविषाणहीनः4’ अर्थात् यस्य जीवने सङ्गीतकलानास्ति तस्य जीवनं व्यार्थमेव प्रतिभाति। प्राचीन कालादारभ्याद्यपर्यन्तं सङ्गीतं महत्त्वपूर्णं स्थानं विन्दति। अजस्रमभ्यासं कृत्वा कोऽपि गातुं शक्नोति, किन्तु भगवत्कृपया यदि केनचिद् मधुरः कण्ठध्वनिः प्राप्यते तर्हि गानस्यानन्दः द्विगुणितो भवति। सङ्गीतकला संस्कृतसाहित्ये कथं विद्वद्भिः विचारिता। तामेव अनुसृत्य किञ्चित् उच्यते। सङ्गीतम् इति शब्दस्य व्युत्पत्तिः एवम् क्रियते। सम्यक्गीयते इति सङ्गाम्म्। यथा उक्तम् सङ्गीतरत्नाकरेण ‘गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते।’ गीतं नाटकस्याङ्गमितिनाट्यशास्त्रकारेणोक्तम्। तस्यानुगामी वादनं नर्तनञ्च। मनुसंहितायां सङ्गीतरत्नाकरे अमरकोषे च ‘तौर्यत्रिक’ शब्दस्यव्यवहारौ नृत्यगीतादिस्थाने दरीदृश्यते।

## नाट्यशास्त्रे चतुर्विधानामभिनयानां विवरण मुपलभ्यते

नाट्यशास्त्रे चतुर्विधानामभिनयानां विवरणमुपलभ्यते। तेषु आहार्याभिनयः अन्यतमः। नाट्यशास्त्रस्य एकविंशतितमेऽध्याये आहार्याभिनयस्य विस्तृतं विवरणं उपलभ्यते । तदनुसृत्य अस्मिन् शोधलेखे विमर्शा कृता। अहार्याभिनयः इत्यस्य कोऽर्थः, आहार्याभिनयः इति नाम कथमायातः, नाट्ये अस्याभिनयस्य महत्त्वं किम्?, पुस्तः अलङ्कारः अङ्गरचना सज्जीवञ्चेति आहार्याभिनयस्य चातुर्विध्यम् च चर्चिताः अत्र। सन्धिमः व्याजिमः वेष्टिमश्चेति त्रिविधः पुस्तः अपि च माल्यम्, आभरणं, वासांसि चेति त्रिविधः अलङ्कारः विवरीताः। अङ्गरचनायां स्वभावजानां वर्णानां विवरणमपि च वर्णानां संयोगेन उपवर्णानामुत्पत्तिः कथमिति उक्तः। चतुष्पदः, द्विपदः, अपदश्चेति त्रिविधः सज्जीवम् उक्तः। अन्ते नाट्ये युद्धस्याभिनये उपयुज्यमानानां आयुधानां विषयः, अन्येषां नाट्योपकरणानां विषयश्च चर्चितः। प्रमुखाः शब्दाः-आङ्गिकः, वाचिकः, सात्त्विकः, आहार्यः, पुस्तः, अलङ्कारः, अङ्गरचना, सज्जीवः सज्जीवं वा, नेपथ्यविधिः, सन्धिमः, व्याजिमः, वेष्टिमः, अभिनयः। भरतमुनिः नाट्यशास्त्रस्य अष्टमेऽध्याये आङ्गिकः, वाचिकः, सात्त्विकः, आहार्यश्चेति चतुर्विधः अभिनयः इति वक्ति। तदेवम् - आङ्गिको वाचिकश्चैव ह्याहार्यः सात्त्विकोऽपरः। ज्ञेयास्त्वभिनयो विप्राः चतुर्धा परिकल्पितः। तत्र नेपथ्यजो विधिः अर्थात् नेपथ्ये पात्रानुसारेण क्रियमाणः वेषभूषणादि-विधिः आहार्याभिनयः इति कथ्यते। नाट्यस्य शुभं ये इच्छन्ति ते नेपथ्यविधौ प्रयत्नं अवश्यमेव कुर्युः। तदुक्तं भरतमुनिना - आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः। तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता। इत्युपसर्गपूर्वकस्य ‘हृञ्-हरणे’ इति धातोः ण्यत् प्रत्ययेन निष्पन्नः आहार्यशब्दः। आहरणीय इत्यर्थः कोशेषु3 दृश्यते। मुखवर्णिका-वेषभूषादयः आहार्याभिनयाः रङ्गे प्रदर्श्यन्ते न तु क्रियन्ते। अतः नेपथ्ये कृत्वा रङ्गं प्रति आहरणीयः इत्यर्थे आहार्याभिनयः इति शब्दः आयातः। नेपथ्यविधिमपि स्वतः नटः एव करोति इति नास्ति। कर्नाटकस्य यक्षगानकलायां नेपथ्यविधिमपि नटः एव करोति। भरतनाट्यादिष्वपि एवमेव दृश्यते। किन्तु नाटकादिषु प्रायः अन्येषां साहाय्येनैव नेपथ्यविधिः क्रियते। अर्थात् अन्येषां साहाय्येनापि आहार्याभिनयः कार्यः भवति। अतः अन्येषां साहाय्येन क्रियमाणः नेपथ्यविधिः अभिनये किमर्थमन्तर्भवति इति चेत्; उच्यते- रावणस्य पात्रवारी एकः रामवत् वेषभूषादिकं धृत्वा उत्तमम् अभिनयं करोति चेदपि रसनिष्पत्तिः न सम्भवति अपि च रसाभासः सञ्जायते।

## निराश्रयाष्टकम्-



हे नीलकंठ प्रियदेवदेव कैलासवासिन्नटराजराज ।
गौरीपते हे करुणावतार निराश्रयं मां जगदीश रक्ष 1
हे लिंगराजेश्वर विश्वनाथ श्मशानवासिन्भवभीतिहन्त ।
हे रोगशोकापह मुक्तिदातः निराश्रयं मां जगदीश रक्ष ?
हे व्याघ्रचर्मावृतयोगिराज कारुण्यपात्राखिललोकबन्धो ।
मुक्तेश्वर प्रेममयादिदेव निराश्रयं मां जगदीश रक्ष ?3
हे पार्वतीवल्लभवामदेव त्रिशूलधारिन् शवभस्मलिप्त ।
मृत्युञ्जयग्रामपते महात्मन् निराश्रयं मां जगदीश रक्ष ?4
हे वीरभद्राकृतिमान्महेश दक्षाध्वरध्वंसकभूतपाल ।
ॐकारशब्दामृतशीतसिन्धो निराश्रयं मां जगदीश रक्ष ?5
हे विश्वकर्मन् सुरसौरदीप्त त्रैगुण्यमूर्ते शिवपारकारिन् ।
विद्योतविश्वेश्वर्सार्वभौम निराश्रयं मां जगदीश रक्ष ?6
हे पालभूगोलगलासुनील गौरांगदीप्तोज्ज्वललोलभोल ।
कपालमालाधरनन्दिकेश निराश्रयं मां जगदीश रक्ष ?7
हे रुद्र आखण्डल सुन्दरास्य त्रैलोक्यनाथ श्रितरक्षदक्ष ।
अद्वैतसिद्धेश्वर नन्दनाथ निराश्रयं मां जगदीश रक्ष ?8

**नन्दप्रदीप्तकुमारः**

# ‘अपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे’

क्षेमेन्द्रस्य औचित्यविचारचर्चायां काव्यस्य जीवितभूतत्वेन औचित्यं स्वीकृतम्। क्षेमेन्द्रस्य पूर्वे आलङ्कारिकैः औचित्यं न स्पष्टतया स्वीकृतम्। क्षेमेन्द्रस्य औचित्यसिद्धान्तस्य मूलं तावदानन्दवर्धनाचार्यस्य ‘अनौचित्यादृते नान्यद्र सभङ्गस्य कारणम्’ इति वचनम्। औचित्यं तु सार्वकालिकमेकं स्थिरं तत्त्वम्। औचित्यं विना काव्यस्य शोभा न जायते। कूटशब्दाः - औचित्यम्, चमत्कारः, संघटना, उचितम्, वक्रता इत्यादयः संस्कृतालङ्कार शास्त्राम्बुधौ काव्यात्मतत्त्व चिन्तने प्रयतमाना आलङ्कारिकाः काव्यविच्छित्ति जनकानलङ्कारादीनङ्गीकुर्वन्ति। केचन रसं केचन वालङ्कारं केचन वा रीतिं केचन वा वक्रोक्तिं काव्यात्मरूपेण स्वीकुर्वन्ति; किन्तु व्यासदासापर पून्यनामा क्षेमेन्द्राचार्यो भिन्नरूपेणौचित्यं काव्यात्मतयाभिप्रैति। विभिन्ने अलङ्कारग्रन्थे औचित्यस्य स्थितिः अधुना मनसि प्रश्नः समुदेति यत्- अस्यौचित्यस्य धारणा क्षेमेन्द्रेण कुत्र प्राप्यत अथवेदमौचित्यं क्षेमेन्द्रस्य स्वशिरस्प्रसूतम् अथवेदमौचित्यं पूर्वे एव स्थितम्। अलङ्कार तत्त्वालोचनायामिदं स्पष्टी भविष्यति। वयं भरताचार्यस्य नाट्यशास्त्रानुसन्धानेन जानीमहे यत्- उचितस्थाने उचितप्रयोग एव सर्वथोचितः। भरतेन औचित्यप्रतिष्ठा न कृता, किन्तु नानाभावोपपन्नस्य नानावस्थान्तरात्मकस्य लोकवृत्तानुकरणभूतस्य नाटकस्य प्रमाणीभूते लोके भावाभिनय प्रकृति पाठ्यछन्दस्स्वरसंगीतादिविषयेष्वनुकूलतां प्रतिकूलतां वौचित्यमनौचित्यं वा स स्वीकरोति। औचित्य मन्तरेण सर्वं हास्यतामुपजायते। तथा हि तेनोक्तम् - अदेशजो हि वेषस्तु न शोभां जनयिष्यति। मेखलोरसि बन्धे च हास्यैवोपजायते। भरतपरवर्तिभा महेनौचित्यशब्दो नोल्लिखितः किन्त्वौचित्यस्य धारणा तेन प्रदत्ता। तन्मते दोषः कदाचिददोषत्वेन प्रतिपाद्यते-

1. शब्दसन्निवेशविशेषात्। 2. आश्रयसौन्दर्याच्च।

यथा स्रक्षु नीलं पलाशं सौन्दर्यं जनयति। तथा शब्दसन्निवेशविशेषाद्दुरुक्तमपि शोभते। पुनश्च रमणीनयनयोर्यथाञ्जनं शोभां जनयति तथा आश्रयसौन्दर्यादपि शोभां धत्ते। यथा ‘अपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे’- इत्युदाहरणे सन्निवेशविशेषात् गण्डपाण्डुशब्दयोः प्रयोगोऽदोषत्वेन प्रतिपादितः। पुनश्च ‘विक्लिन्नगण्डानां करिणां मदवारिभिः’ इति। ‘मदक्लिन्नकपोलानां द्विरदानां चतुष्शती’ इत्युदाहरणद्वये क्लिन्नगण्डशब्दयोः दोषत्वमाश्रयसौन्दर्याददोषत्वेन संस्थापितम्। भामहस्यात्र व्यक्ताभिप्रायस्तावत्कविना साधुशब्दाः प्रयोगी क्रियन्ते चेत् शब्दसन्निवेशविशेषादाश्रयसौन्दर्ययाद्वा व्यवह्रियन्ते। अर्थादौचित्य वशाच्छब्द प्रयोगे दोषो नोपजायते। भामहेन विषयोऽयमुदाहरणेन दृढ़ीक्रियते- ग्राम्यं सुरभि कुसुमं त्याज्यम्; किन्तु स्रक्षू पयुक्त स्थान विन्यासविरचितत्वात् शोभां धत्ते तथा काव्येष्वपि। दण्डिनः काव्यादर्शे औचित्यशब्दो नेक्ष्यते। तन्मते कविकौशलात्कदाचिद्विरोधो दोषगणनामुत्क्रम्य गुणवीथीं विगाहते। दण्डिनः ‘कविकौशलात्’ इति पदेनौचित्यवत्पदप्रयोगोऽव्यक्ततयोल्लिखितः।

नवमशताब्द्यां रुद्रटस्य काव्यालङ्कारे ध्वनितं यत्- रीतिषूपयुक्तस्थानेष्वौचित्यवशाद्रसप्रयोगः समुचितः।दशमशतकस्य भोजराजेनाप्यनुरूपतयानुसरति दण्डिनो वक्तव्यम्। भोजदेवस्य मते जात्यादीनां शब्दालङ्कारसंज्ञा। धारेश्वरभोजदेवेन चतुर्विंशतिप्रकारकाः शब्दालङ्कारजातयः स्वीकृताः।जातेः लक्षणप्रसङ्गे तेनोक्तम् -

तत्र संस्कृतमित्यादिर्भारती जातिरिष्यते ।
सा त्वौचित्यादिभिर्वाचामलङ्काराय जायते।।

तन्मते औचित्याकृष्ट एवालङ्कारः। पुनश्च तेन वाच्यविषयदेशसमयौचित्यः दर्शिताः। अनन्तरं गतेरलङ्कारत्वनिर्णयप्रसङ्गे तेन गदितम् -

पद्यं गद्यं च मिश्रं च काव्यं यत्सा गतिः स्मृता।
अर्थौचित्यादिभिः सापि वागलङ्कार ईष्यते।।

अर्थौचित्यः व्याख्यानप्रसङ्गे उच्यते कथाख्यायिकादौ गद्यमेव चम्पूप्रभृतौ मिश्रमेवेत्यादि पदोपात्तबन्धोचिती द्रष्टव्या इति। प्रयोगव्यवस्थाया उपपादनसमये भोजदेवेनोक्तम् -

यथामति यथाशक्ति यथौचित्यं यथारुचि।
कवेः पात्रस्य चैतस्याः प्रयोग उपपद्यते।।

अत्र मतिर्व्युत्पत्तिः। तत्र शक्तिव्युत्पत्ती कवेरेव। औचित्यं तु पात्रस्यैव। वाग्भटस्य काव्यानुशासने रसाविघातकेषु शब्ददोषेष्वनुचितार्थशब्ददोषः संलोचितः। पदे वाक्ये चानौचित्येन यत्प्रयुक्तं तदनुचितार्थम्। षोडशप्रकारकेष्वर्थदोषेषु भिन्नसहचरत्वमुल्लेखनीयम्। तत्रोचितसहचारिभेदस्य कथोल्लिखिता।समालङ्कारस्य स्वरूपनिर्णयसमये औचित्यं समाहृतम्। पुनश्च स्त्रीणामष्टावस्थावर्णनाप्रसङ्गे वासकसज्जाया लक्षणं लक्षितम्- ‘उचिते वासके प्रगुणीकृतसर्वोपकरणा वासकसज्जा।’ आनन्दवर्धनेन तस्य ध्वन्यालोके अलङ्कारौचित्य-ध्वन्यौचित्य-वृत्तौचित्य-संघटनौचित्य-प्रबन्धौचित्य-रसौचित्यादिरूपेण औचित्यस्य विभिन्नाः स्थितयः वर्गीकृताः। ध्वन्यालोकस्य तृतीय उद्योते तेन संघटनायाः स्वरूपोद्भावने मनोनिवेशः कृतः। तत्र औचित्यस्य आवश्यकता दृश्यते। संघटना त्रिविधा-असमासा, मध्यमेन समासेन भूषिता, दीर्घसमासा च। किन्तु अस्याः संघटनाया आश्रयः कः नियामकः कः कार्यं किम् इत्येतद्विषये आनन्दवर्धनाचार्येण उक्तम् -

गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।
रसान् तन्नियमे हेतुरौचित्यं वक्त्रिवाच्ययोः।।

माधुर्यादिगुणाः भवन्ति आश्रयाः, रसद्योतनं तस्य कार्यम्, वक्त्रिवाच्ययोः औचित्यं तन्नियामकत्वम्। वक्त्रिवाच्ययोः औचित्याभावात् काव्यस्य रसप्रतीतौ अभावो जायते। यथा करुणविप्रलम्भ-शृङ्गारयोस्त्वसमासा संघटना, किन्तु अत्र दीर्घमध्यमसमासानां प्रयोगे वक्तृवाच्योः औचित्याभावात् ध्वन्यात्मभूतरसाभावात् न तु काव्यमास्वाद्यते। पुनश्च रौद्ररसे मध्यमसमासस्य औचित्यम्। कथानायकः यदि धीरोद्धतो भवति तर्हि संघटना भवति दीर्घसमासा। धीरललिते च मध्यमसमासा। किन्तु अस्य नियमस्य अनौचित्यात् रसप्रतीतौ व्यवधायको भवति। वक्तृवाच्यगतौचित्ये सत्यपि संघटनायां विषयौचित्यस्य आवश्यकता वर्तते। विषयौचित्येनापि संघटना नियन्त्रिता भवन्ति। प्रबन्धवत् मुक्तकेष्वपि रसबन्धाभिनिवेशिनो भवन्ति कवयः। यथा - अमरुकवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव। स्यन्दानितकादिषु विकटनिबन्धनौचित्यान्मध्यसमासादीर्घसमासे एव रचने। पर्यायबन्धे पुनः असमासामध्यमसमासे एव संघटने। इतिवृत्तस्य केवलविन्यासत्वात् रसाभिनिवेशस्य नात्यन्तम्। अतः स्वेच्छाचारः। कुलकादिनिबन्धनस्य आधिक्यात् दीर्घसमासायां खण्डकथासकलकथयोर्न विरोधः। अत्र रसानुसारं वृत्तौचित्यमनुसर्त्तव्यम्। सर्गबन्धे रसतात्पर्यात् यथा रसौचित्यम्। अभिनेयार्थे रसबन्धेऽभिनिवेशः कार्य्यः। आख्यायिकायां गद्यस्य गाड़बन्धाश्रयेण शोभाजनकत्वात् तस्य च प्रकृष्यमाणत्वात् भूम्नि मध्यमसमासादीर्घसमासे एव संघटने। कथायां गाड़बन्धप्राचुर्येऽपि गद्यस्य रसबन्धोक्तमनुसर्तव्यम्। यथा गद्यबन्धे विप्रलम्भशृङ्गारकरुणयोराख्यायिकां दीर्घसमासा न शोभते। अतो गुणसंघटनयोर्नियामकत्वं तावद्वक्तृवाच्यविषयौचित्यम्। एतदौचित्यत्रयं रसौचित्येन नियन्त्रितम्।

रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।
रचना विषयापेक्षं तत्तु किञ्चित् विभेदवत्।।

अस्याः कारिकायाः वृत्तावुक्तम्- ‘विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च।’ अर्थात् विषयमूलकमौचित्यं रसमपेक्षते। विषयमूलकमौचित्यं रसौचित्यानुसारं गृहीतमगृहीतं वा। यथा - आख्यायिकायां नात्यन्तमसमासा स्वविषयेऽपि नाटकादौ नातिदीर्घसमासा चेति संघटनायाः दिगनुसर्त्तव्या। ननु प्रबन्धस्य व्यञ्जकत्वम्। प्रबन्धारसादीनां व्यञ्जकः। तस्य व्यञ्जकत्वे ‘पूर्वं हि कथा परीक्षा। तत्राधिकावापः फलपर्यन्तानयनं रसं प्रति जागरणं तदुचितविभावादिवर्णनेऽलङ्कारौचित्यमिति।’ विभावानुभावसञ्चार्य्यौचित्यचारुणः कथाशरीरस्य प्रकाश एव विधिः। तत्र विभावौचित्यं तवत्प्रसिद्धम्। भावौचित्यं तावत्प्रकृतौचित्याद् भवति उत्तममध्यमाधमभावात् दिव्यमानुषादिभावाच्च प्रकृतौचित्यं विविधप्रकारकं भवति। यथायथ प्रकृत्यनुसारि स्थायिभावोपनिबन्धनमौचित्यानुसारि।15 रसानुकूलविषयस्य योजनं कर्तव्यम् इतिवृत्तविषयो यदि रसानुसारि न भवति तर्हि तं परित्यज्य रसानुसारिणः कल्पितविषयस्य प्रयोग एव समुचितः। एतेन न दोषः। शास्त्रसमापनेच्छया न रसाभिव्यक्तये सन्धिसन्ध्यङ्गानां योजनं कर्तव्यम्। काव्यस्य प्रयोजनानुसारं कुत्रचिद्रसस्योद्दीपनप्रशमनयोरभिनिवेशः कर्तव्यः। अङ्गिरसाभिव्यक्तिं प्रति दृष्ट्यर्पणम्। कविः स्वशक्तिप्रदर्शनार्थं न रसादेरभिव्यक्तये औचित्यमूलकान् अलङ्कारादीन् योजयति।अतः प्रबन्धे प्रसिद्धानुसारमौचित्यबन्धस्य विन्यास एव रसस्य श्रेष्ठो निदर्शकः। तथा हि नाट्यशास्त्र आदिष्टं- ‘प्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यक कर्तव्यतयोपन्यस्तम्। तेन हि नायकौचित्यानौचित्यविषये कविर्न व्यामुह्यति।

## अशक्तं धर्ममर्थानाम् दीपयद् यस्तु दीपकम

अशक्तं धर्ममर्थानाम् दीपयद् यस्तु दीपकम। वक्रोक्त्यौचित्यसिद्धान्तयोः प्रतिपादनं साम्यताम् अवगाहते। क्षेमेन्द्रस्य दृष्टिस्तावत् सर्वकालिकी। कुन्तकस्यापि दृष्टिः सार्विकी एव। अतः उभयो आलोचनायाः क्षेत्रं सर्वव्यापकम्। तत्र व्याख्याकारस्य विश्वेश्वरसिद्धान्तशिरोमणेः ‘हिन्दी वक्रोक्तिजीवित’ इति ग्रन्थस्य भूमिकांशे नगेन्द्रेण लिखितम् -

‘उनकी मान्यता तो केवल यह है कि वक्रता अथवा काव्य सौन्दर्य का मूल आधार औचित्य है; क्योंकि औचित्य कि यत्किञ्चित् हानि से भी सहृदय के आह्लाद में व्याघातोत्पन्न हो जाता है ......... ‘वाक्यस्याप्यैकदेशौचित्यविरहात् सहृदयहृदयाह्लादकारित्वहानिः।’ अतएव कुन्तक के मत से औचित्य काव्य सौन्दर्य अथवा वक्रता का अनिवार्य किन्तु सामान्य गुणमात्र है, न व्यावर्तक धर्म है और न पर्याय ही अर्थात् सौन्दर्य के सभी रूपों में औचित्य की अवस्थिति अनिवार्य है, परन्तु औचित्य के सभी रूपों में कदाचित् वक्रता की अनिवार्य स्थिति कुन्तक को मान्य नहीं है।’ इसके अतिरिक्त दोनों सम्प्रदायों के मूल दृष्टिकोण में स्पष्ट अन्तर है। वक्रोक्ति का आधार है वस्तुनिष्ठ कल्पना।

**अतो वक्रोक्तिस्तावत् वस्तुनिष्ठकल्पना औचित्यं तावत् व्यक्तिनिष्ठपरिज्ञानम्।**

**धनञ्जयस्य दशरूपके औचित्यमनौचित्यञ्च विलिखिते।**

धनञ्जयस्य मते रूपकाणां नाट्यवस्तुनि न केवलं रामायणमहाभारतपुराण प्रोक्तानि भवन्ति अपि चेतिहासाश्रितानि भवन्ति। अतः गुणाढ्यस्य वृहत्कथाया इतिहासाश्रयत्वादवश्यमेव रूपकस्य कथावस्तुरूपेण विवेच्यम्। एवं प्रकारेण रामायणादिग्रन्थान् सम्यक् पर्यालोच्य नाट्यकारो रसस्य यथोचितसन्निवेशेन चित्रगुणान्वितेनौचित्यपूर्णेन च कथावस्तुनि प्रकाशयति। पुनश्चानुचितोऽनुचितो विषयोऽपि कवेर्नाभिप्रेतः। भरतस्य नाट्यशास्त्रे विद्यते - ‘विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः’ इति। किन्तु विभावादीनामेकस्य द्वयस्य वा सद्भावे कथं रसनिष्पत्तिरिति चेदुच्यते -

सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।
झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते।

रस एव काव्यस्य मुख्यः। यतः - ‘न हि रसादृते कश्चिदर्थः प्रवर्तते’ (नाट्यशास्त्रः)। किन्तु रसस्यानौचित्यप्रवृत्तत्वे रसाभासो जायते। महिमभट्टस्य मते पृथक्तया अनौचित्यस्य आलोचनेन अलम्। तन्मते ‘रसात्मकं काव्यमिति कुतस्तत्रानौचित्यस्पर्शः सम्भाव्यते।’

**औचित्यशब्दविवेकः-** पूर्वाचार्याणाम् औचित्यमिदं शिरसिकृत्य क्षेमेन्द्रेण सार्वकालिकं सार्वभौमिकं औचित्यं प्रतिष्ठापितम्। वच्-धातोः कितच् प्रत्ययेन उचितशब्दोः निष्पन्नः। उचितस्य भावः तावदौचित्यम्। अथवा उचितशब्दात् ‘ष्यञ्’ प्रत्ययेनौचित्यशब्दोत्पत्तिः। उपयुक्ततां योग्यत्वम् इत्यमरः। साहित्यदर्पणे दीप्तम्- ‘एता अपि यथौचित्यादुत्तमाधममध्यमः’ इति। वाचस्पत्येऽपि स्पन्दितम्- ‘उचितस्य भावः ष्यञ्’ इत्युक्तत्वे। एता अपि यथौचित्यात्’ । अलङ्कारशास्त्रे अस्य औचित्यस्य अर्थस्तावत् औचित्यदृष्ट्या काव्यसमालोचनम्। अर्थात् काव्यानां गुणालङ्काररसादीनां विवेचनम् औचित्यदृष्ट्या विचार्यम्। कवेः वक्तव्यं घटनानुकूलं न वा काव्ये वाक्य-पद-गुणालङ्काररसादीनां सन्निवेशो यदि औचित्यमिदं स्थिरमविनश्वरं वा। वस्तुतया काव्यशोभाहेतुत्वात् आहार्यत्वात् गुणालङ्कारयोर्निर्जीवित्वम् औचित्यं विना। प्रसङ्गेऽस्मिन् डॉ. नागेश-चन्द्र-पाण्डेयस्य मतं संस्मरणीयम् - ‘काव्य एक दूसरे का उपकार करने वाले शब्दों और अर्थों का समुच्चय रूप है। उसमें उपमा, उत्प्रेक्षा आदि जो प्रचुर अलङ्कार हैं, वे कटक, कुण्डल, केयूर-हार आदि के समान केवल बाह्य शोभा हेतु होते हैं। इसी प्रकार कुछ ..... चतुर लोगों ने काव्य के गुणों की प्रसङ्ग में गणना की है पर वे भी अस्थिर धर्मा होते हैं। जैसे सत्य, शील आदि मानवीय गुण औचित्य तो जैसा कि इसके आगे लक्षण किया जायेगा, काव्य का स्थिर अविनश्वर जीवित है इसके बिना काव्य निर्जीव है भले ही वह गुण, अलङ्कार से युक्त हो; शृङ्गारादि रसों से भरपूर काव्य का औचित्य वैसे ही जीवित है जैसे रसायनों द्वारा परिपुष्ट व्यक्ति के लिये सेवनीय रस मात्र का उचित होना जीवित होता है।’

यथोचितस्थानविन्यासाद् गुणालङ्कारौ शोभादायकौ भवतः। तथा हि क्षेमेन्द्रेण उक्तम् -

उचितस्थानविन्यासादलङ्कृतिरलङ्कृतिः। औचित्यादच्युता नित्यं भवन्त्येव गुणा गुणाः।।

उचितस्थानविन्यासादलङ्कृतिरलंकर्तुं क्षमा भवति। त्वलङ्कृतिव्यपदेशमेव न लभते। तद्वदौचित्यादपरिच्युता गुणा गुणतामासादयन्ति, अन्यथा पुनरगुणा एव।

अलङ्कारादीनामुचितस्थानविन्यासाद् चमत्कारित्वं जायते। इदं चमत्कारित्वं च आह्लादगतलोकोत्तरत्वम्। यतः रसगङ्गाधरे प्रतिपादितम् - ‘लोकोत्तरत्वं च आह्लादगतश्चमत्कारत्वापरपर्यायः।’ परिशेषे क्षेमेन्द्रस्योक्तिरियं संस्मरणीया ‘परस्परोपकारकरुचिरशब्दार्थरूपस्य काव्यस्योपमोत्प्रेक्षादयो ये प्रचुरालंकारास्ते कटककुण्डलकेयूर-हारादिवदलङ्कारा एव वाह्यशोभाहेतुत्वात्। येऽपि काव्यगुणाः केचन तल्लक्षणविलक्षणैः समाम्नातास्तेऽपि श्रुतसत्यशीलादिवद्गुणा एव आहार्यत्वात्। औचित्यं त्वग्रे वक्ष्यमाणलक्षणं स्थिरमविनश्वरं जीवितं काव्यस्य तेन विनास्य गुणालङ्कारयुक्तस्यापि निर्जीवत्वात्। रसेन शृङ्गारादिना सिद्धस्य प्रसिद्धस्य काव्यस्य धातुवादरससिद्धस्येव तज्जीवितं स्थिरमिति। पूर्वपूर्वालोचनाया ज्ञायते यत्- औचित्यस्येयं स्वाभाविकी स्थितिर्न तु नवीना। भरत-भामह-दण्डि-रुद्रटालङ्कारिकैः औचित्यस्य धारणा दीयते।

## शुद्धादिविभागानामुदाहरणरूपेण सर्वदैव स्त्रीलिङ्गस्य प्राधान्यं स्वीकृतम्

तस्य सुस्पष्टविभाजनं तेन कृतम्। लिङ्गं नाम तृतीय प्रातिपदिकस्य विभागवर्णने स्त्रीलिङ्गस्य कापि संज्ञा न प्रदत्ता। तथापि शुद्धादिविभागानामुदाहरणरूपेण सर्वदैव स्त्रीलिङ्गस्य प्राधान्यं स्वीकृतम्। अतः स्त्रीलिङ्गवाचकशब्दानामुदाहरणं प्रारम्भे एव प्रदत्तम्। स्वरूपमनुकार्यश्चेति स्वार्थप्रातिपदिकस्य दृष्टान्तः श्लोकेन समुल्लिखितः। पुनश्च अनाश्रयरूपप्रातिपदिकार्थस्योदाहरणं प्रसिद्धशास्त्रेषु प्रदत्तम्। अन्तिमे भावस्यापि विवेचनं समाम्नातम्। भोजनरेन्द्रकृतस्य प्रातिप्रतिपदिकार्थस्य विभाजनं सुतरां वैज्ञानिकं वर्तते। परन्तु बहुषु स्थानेषु समुचितसंज्ञाभावात्तस्य सार्थकता न विद्यते। प्रमुखाः शब्दाः शब्दः, अर्थः, प्रातिपदिकम्, प्रातिपदिकार्थः, प्रकृतिः, प्रत्ययः, समासः, नियतोपस्थितिः, स्वार्थः, द्रव्यम्, लिङ्गम्, स्वरूपम्, अनुकार्यम्, द्रव्यम्, लिङ्गम्, आश्रयरूपम्, अनाश्रयरूपम्, शुद्धम्, मिश्रम्, सङ्कीर्णम्, उपसर्जनम्, आविष्टम्, अव्यक्तम्, गुण, परिमाणम्, सम्बन्ध इत्यादयः। सरस्वतीकण्ठाभरणस्य श्रीमद्भोजनरेन्द्रस्य विरचितः साहित्यप्रकाशो नाम शृङ्गारप्रकाशः खलु संस्कृतकाव्यशास्त्रस्योत्कृष्टो ग्रन्थः। न केवलं काव्यशास्त्रस्य मुख्यवेदाङ्गस्य व्याकरणस्याप्यालोचनात्मकोऽयं ग्रन्थः। एतादृशे प्रौढग्रन्थे षट्-त्रिंशत् प्रकाशा विद्यन्ते। तत्र प्रथमप्रकाशे काव्यलक्षणविमर्शकाले ग्रन्थकृतोच्यते- काव्यं शब्दार्थयोः साहित्यमामनन्ति। तद्यथा ‘शब्दार्थौ सहितौ काव्यम्’1 इति।’ तत्र येनोच्चारितेनार्थः प्रतीयते स शब्दः।2 अयं शब्दः द्वादशधा।3 पुनः यः शब्देन प्रत्याय्यते स चार्थोऽपि द्वादशधा- 1. क्रिया 2. कालः 3. कारकम् 4. पुरुषः 5. उपाधिः 6. प्रधानम् 7. उपस्कारार्थः 8. प्रातिपदिकार्थः 9. विभक्त्यर्थः 10. वृत्यर्थः 11. पदार्थः 12. वाक्यार्थः इति।

# अमृतवाणी गीतातत्वार्थ बोधः

**गीता ज्ञानप्रियः सदा सुखी भवति।**



शत्रुघ्नश्रीनिवासाचार्यः ( पंडित शंम्भुनाथ शास्त्री वेदान्ती ) भागलपुर ( बिहार )

॥ श्रीमतेरामानुजाय नमः॥
श्रीगुरुचरणकमलेभ्यो नमः?

आचार्यचरितामृतम्
श्रीस्वामीरङ्गरामानुजाचार्यस्तोत्रम्
अनन्त श्री विभूषित स्वामी रङ्गरामानुजाचार्य जी महाराज सरौती हुलासगंज गया ( बिहार )

**रचयिता -** शत्रुघ्नश्रीनिवासाचार्यः पंडित शंम्भुनाथ शास्त्री वेदान्ती भागलपुर (बिहार)

श्रीरजेन्द्रयतीन्द्रपादयुगले
सद्भक्तिमानन्वहम्,
श्रीकौण्डिन्यकुलेपराङ्कुशमनि-
जीतोमहाब्धौविधुः ।
तत्पादाश्रित लब्धबोधनिखिलं
श्रीरङ्गरामानुजम्,
श्रीमतकाश्यपवंशजंगुरुवरं
भक्त्या सदा संश्रये।।1 ?
श्रीश्रीवैष्णवधर्मकर्मनिरतं
श्रीवैष्णवानां धनम्,
श्रीनारायणपादपद्मविमलं
भक्त्या हि संसेवितम्।
प्रस्थानत्रयदर्शनमभिमतं
लोकेषु संस्थापितम्
वन्देऽहं करुणाकरं गुरुवरं
श्रीरङ्गरामानुजम्।।
षड्दर्शनवेदाङ्गसारममलं
ज्ञानं सदा दीयते ,
श्रीरामानुजसंम्प्रदायविहितं
सद्ज्ञानसंम्भाषितम्।
सौशील्यादिगुणान्वितं यतिवरं
सद्भक्तिमानन्वहम् ,
वन्देऽहंकरुणानिधिं मुनिवरं
श्रीरङ्गरामानुजम्
श्रीलक्ष्मीपतिविष्णुभक्तिनियतं
सद्ज्ञानसंचारकम्
राधावल्लभपादपद्मयुगलं
चित्ते हि संधारकम् ।
श्रीरामस्यचरित्रचिन्तनपरं
वैराग्यरूपं मुनिम्
वन्देऽहं वैराग्यरागरसिकं
श्रीरङ्गरामानुजम्।।4 ?
परमाचार्यसुरक्षितंसुविमलं
ज्ञानादिसम्वाहकम् , श्रीवेदान्तविशारदं द्विजवरं
सत्साधकं तापसम् ।
श्रीरङ्गेशकृपाकटाक्षमनघं
श्रीसद्गुरुं नौमि तम्
वन्देऽहं गुणसागरं नरवरं
श्रीरङ्गरामानुजम्

## ॥ गीतोपनिषद् ज्ञानामृतं॥



अनन्त श्री विभूषित स्वामी रङ्गरामानुजाचार्य जी महाराज श्री लक्ष्मी नारायण मन्दिर हुलासगंज गया, बिहार



॥ गुरूत्वज्ञानकेन्द्रं नौम्यहं। ।
॥ श्रेयसे हि गुरुतत्वम् ॥

गीताज्ञान संचरणमेव समेषामात्मश्रेयसे एव। इति ध्येयं सततं। इदमेव गुरुभिरपि क्रियते।।
संसारे दुर्लभत्वं भवेत् परम् अभावो नास्ति। पूर्ण परब्रह्मणः सृष्टिरपि पूर्णा। ।
साम्प्रतमपि वास्तविकः आत्मकल्याणकारी गुरुः विद्यते एव।
समेषां बोधनाय हिन्दी भाषायां
ये ही मेरे जीवन के निर्माता परम हितैषी आध्यात्मिक निर्मल आचार्य गुरुपाद हैं। इनका विशाल उदार पवित्र जीवन है। मेरे जीवन की सत्यानुभूति है। 2011 में विहार प्रान्त के जहानाबाद अरवल जनपद में मार्च माह में श्रीराम संस्कृत महाविद्यालय सरौती भौतिक स्थान पर यज्ञ का आयोजन हुआ था।इन्हीं मठाधीन वह महाविद्यालय है। मैं भी वहीं कार्यरत हूं। गुरुदेव ही समायोजक थे। उस समय भी वहीं था। यज्ञ समाप्ति तक साथ ही रह कर सब तरह से हार्दिक समर्थन सहयोग किया था। यज्ञ समापन के पश्चात् पूज्य गुरुदेव अपने नियत आवास पर जाने केलिए प्रस्तुत हुए। जाने के पूर्व गुरुदेव ने मुझे विशेष रूप से बुलाया। वह भी मात्र मुझे ही। जो उन्होंने मुझे विशेष इंगित कर कहा वह सम्पूर्ण गीताज्ञान सार था। अत्यंत अनुभूति के सरल सरस सु-वासित अत्यल्प शब्दों जो सब केलिए आत्मकल्याणकर है
ूज्य गुरुदेव का शब्दोच्चार पण्डित जी आप गृहस्थाश्रम में रहते हैं। सबों का शास्त्रीय कर्मों से पालन-पोषण कर्तव्य है। रन्तु सबों केलिए करते हुए भी अपने आत्मकल्याण पर ध्यान अवश्य देंगे। दूसरा मेरा शास्त्रीय तथा व्यावहारिक अनुभव है इस संसार में कोई अपना नहीं है।' ये दोनों वाक्य सदैव कर्णकुहरों में गूंजते रहते है। जिससे सदैव आत्मकल्याणकारी गुरुतत्व का संचार सावधान स्तम्भ जीवन विकास का समर्थ सम्बल है। आज गुरुपूर्णिमा के समापन दिवस पर पूज्य गुरुदेव के उपर्युक्त दोनों सन्देशों का संस्मरण सार्थकता का बोधक होगा।

नारायण ॥ गीताज्ञान सन्देश॥
॥ का ध्यान में निश्चित आत्मकल्याण ॥

# अद्य श्रीअयोध्यायां विविध क्षेत्रेषु गुरु पूर्णिमा पर्वणस्य उपलक्ष्ये, दुरात्श्रध्दालवः समागच्छन्ति

**अयोध्या/ वार्ताहरः शिवम त्रिपाठी**

अद्य श्री अयोध्यायां विविध क्षेत्रेषु गुरु पूर्णिमा पर्वणस्य उपलक्ष्ये, दुरात्श्रध्दालवः समागच्छन्ति । अद्यैव आषाढ़शुक्लपूर्णिमायां अष्टादशेषु पुराणेषु कर्ता श्रीव्यासस्य जनुर्दिवसोऽपि भवति तस्मिनैव उपलक्ष्ये वयं श्रीगुरुपूर्णिमा पर्वणस्य बोधयामः। ज0गु0रा0 स्वामी श्री सूर्यनारायणाचार्यः श्री द्वारकाधीश मन्दिर राजघाट अयोध्यायां निजाश्रमे गत्वा वयं सर्वे श्रध्दालवः तत्र गत्वा पुजार्चनां कृतवन्तः ,तत्र उपस्थितार्चकाः, प्रवेशकुमारशुक्लः , दीपकतिवारी, शुभम चतुर्वेदी ,रोहित दूबे अन्ये शिष्यः यथाशक्ति आराधनां कृतवन्तः। गुरुणा सन्दर्भे उक्तमस्ति क्रोधोऽपि देवस्य वरेण्य तुल्यःङ एवञ्च वरं विरोधोपि समं महात्मभिः उक्तिरियमस्ति। वैकुण्ठधामदेवालये स्वामी श्री श्यामनारायणाचार्याणां उत्तरकुलपतिनः मोहितकृष्णशास्त्रिवर्याः , विवेकानंद द्विवेदी, अनमोल झा अन्ये समुपासकाः वन्दितवन्तः। एवं लक्ष्मणपुरतः समागताः श्री वेद प्रकाश मिश्र महोदयः श्री हनुमानगढ़ी देवालयं गत्वा दर्शनं एवं महन्थ श्रीराजूदास महोदयेन साकं मेलनं कृतवान्।



# बसपा दलस्य संगमनगर्यां प्रबुद्धवर्ग सम्मेलनं आयोजितम्



सायंकाले अरैल स्थिते जय श्री महाकाल घट्टेआयोजिते गंगायाः आर्तिक्ये मुख्यातिथिः रूपेण सतीशचन्द्र मिश्रः सम्मिलितो जातः




हंडिया विधानसभा क्षेत्रस्य सैदाबाद क्षेत्रे सोमवासरे आयोजितम् सम्मेलनम्

**प्रयागराजः। वार्ताहरः।** बसपा दलस्य संगमनगर्यां प्रबुद्धवर्ग सम्मेलनं आयोजितम्। बहुजन समाज पार्टी इति दलस्य राष्ट्रीयः महासचिवः सतीशचन्द्रमिश्रः संगमनगर्यां आयोजिते प्रबुद्ध वर्गसम्मेलने भाजपा दलोपरि आक्रामकः दृष्टः। सहैवब्राह्णान् प्रीणनाय स्वपक्षतः कोऽपिप्रयासः न त्यक्त-वान्। हंडिया विधानसभा क्षेत्रस्य सैदाबाद क्षेत्रे सोमवासरे आयोजिते अस्मिन् सम्मेलने स सत्तारूढ़े भाजपा दलेप्रभोः श्रीरामस्य नाम्नि संविदा कारस्य आरोपः संशुेषितवान्। सतीशचन्द्रमिश्रः मुख्यमंत्री योगी आदित्यनाथोपरि प्रत्यक्षं आरोपितं यत् स ब्राह्मणैः ईर्ष्यते। तस्य अवधारणा अस्ति यत् ब्राह्मणान् आर्थिकं, शारीरिकं, बहुप्रकारेण च पादाहतिः कुर्यात्। नैनी क्षेत्री बसपा दलस्य राष्ट्रीयः महासचिवः सतीशचन्द्रमिश्रः सोमवासरे सायंकाले अरैल स्थिते जयश्री महाकाल घट्टेआयोजिते गंगायाः आर्तिक्ये मुख्यातिथिः रूपेण सम्मिलितोजातः । तत्र स गंगायाः दुर्दशायां क्षोभं प्रदर्शयन् उक्तवान् यत् केन्द्रे प्रदेशे च भाजपा दलस्य एव सर्वकारे गंगायाः ब्राह्मणानां च उभयोः दुर्दशा भवति।

## ।।गीतोपनिषद् ज्ञानामृतं।।



गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः



वेदोपनिषद् समारम्भां गीतां ज्ञानामृतां रमां।।
जीव कल्याण पर्य्यन्तां, कृष्णकृपां नमाम्यहं।।1
कृष्णं नमामि नित्यं हि ,सर्व ज्ञानाश्रयं हरिं। ।
गुरूत्व ज्ञान केन्द्रञ्च, सर्वज्ञाननिवर्तकम्।।2।।
सर्वेषां ज्ञानदातारं, सर्वज्ञं केशवं गुरुं।
निरपेक्षं समर्थञ्च मुहुर्मुहुः नमाम्यहं।।3।।
सर्वसंशयनाशाय सर्वाज्ञाननिवृत्तये।
सर्वज्ञान प्रदात्रे हि नमामि कृष्णं मंगलम्।।4।।
नित्यानन्दं सुधानन्दं सर्वानन्दं हि नन्दनम्।।
ज्ञानं ज्ञेयं तथा नम्यं कृष्णं कृष्णं नमाम्यहम्।।5

गुरुपूर्णिमावसरे सृष्टितः येन केनापि प्रकारेण विश्व कल्याणाय ज्ञानं दत्तं तेभ्यो सर्वेभ्यो गुरुभ्यो नमो नमः। व्यास प्राकट्य दिवसे बहुकालतः गुरुत्व सम्मानायआषाढमासीयपूर्णिमायांगुरुमहोत्सवः आयोज्यते शिष्टैः जनैः। किं कथनीयं किन्न कथनीयं इति विचार द्वन्द्वे उपनिषद् शरणं वरम्।

।। कठोपनिषदि।। अध्याय। ।1।।7
श्रवणायापि बहुभियी न लभ्यः,
श्रृण्वन्तोऽपि बहवो यं न विदुयुः।
आश्चयी वक्ता कुशलोऽस्य लब्धा-
ऽऽश्चयी ज्ञाता कुशलानुशिष्टः।

**॥ हिन्दीभावानुवादः। ।**

स्वयं यमराज नचिकेता से कह रहे हैं आत्मतत्व असाधारण दुर्लभ है। सर्व प्रथम तो सं-सार में अधिकांश लोग इसकी चर्चा तक सुनना नहीं चाहते। ये लोग रातदिन विषय चर्चा में लीन रहत हैं। आत्मतत्व जानने केलिए इनके मन में कल्पना भी नहीं उठती। कुछ लोग उत्तम समझकर सुन भी लेते तो मन में निश्चय नहीं हो पाता। कुछ तीक्ष्ण बुद्धिजन समझकर भी आत्मसात् नहीं कर पाते हैं। इनमें भी कोई कोई दुर्लभ विरल महापुरुष होते हैं जो यथार्थानुभूति की परिधि में आत्मतत्व का यथार्थ रूप से वर्णन करनेवाले समर्थ वक्ता होते हैं। इससे भी अधिक विरल दुर्लभाति दुर्लभ वे हैं जिन्होंने आत्म साक्षात्कार कर लिया हो।अतः सर्वतः आध्यात्म ज्ञान दुर्लभातिदुर्लभ है। । परन्तु अकाट्य वज्र सत्य है दुःख निवृत्ति केलिएपरमात्म सम्बन्ध महान् सवोच्च सवोत्तम परम श्रेष्ठ साधन है। ।

**॥ श्वेताश्वतरोपनिषद् ॥**

यदा चर्मवदाकाशं वेष्टयिष्यन्ति् मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ।।20।

जिस तरह संसार का सम्पूर्ण मानव एक साथ मिलकर भी आकाश को चमडे की तरह नहीं लपेट सकता है। उसी तरह उस परम पिता परमात्मा को जाने विना आत्यंतिक दुःख का अन्त संभव नहीं है। यही गुरुपूर्णिमा पर उपनिषद्का परम कल्याण मय सन्देश है। मानव जीवन परमात्म सृष्टि सवोच्च सवोत्तम प्राणी है। उन्हीं केलिए गुरुपूर्णिमा है। प्रतिदिन नित्य सावधान हो परमात्म सम्बन्ध संचार केलिए यत्न ही यथार्थ यत्न होगा।

**॥ परमगुरवे कृष्णाय नमः॥**

# गरुडः विष्णोः वाहनमस्ति, अस्य वेदेषु अपि प्रसङ्गः प्राप्तोऽस्ति

गरुडः विष्णोः वाहनमस्ति। अस्य वेदेषु अपि प्रसङ्गः प्राप्तोऽस्ति। तत्र एतस्मै गरुत्मान् शब्दस्य प्रयोगः जातोऽस्ति अयं च नितरां सुपक्षी उक्तोऽस्ति। महाभारते पुराणेषु च यः एतस्मै ताक्ष्र्यशब्दः प्रयुक्तोऽस्ति तस्यापि उल्लेखः ऋग्वेदे कृतोऽस्ति। परन्तु तत्र ताक्ष्र्यशब्दस्य आशयः गरुडाय न भूत्वा हयायास्ति।रामायणे महाभारते च अनेकस्थानेषु गरुडस्य वैदिक-गरुत्मान् रूपेण समता प्रदर्शितास्ति । अयम् अरुणाग्रजः भानुं हतप्रभकर्ता विनताकश्यपयोः च सुतोऽस्ति । हाप्किन्समहोदयः एतस्य कथायाः विस्तारेण वर्णनं कृतवान्। महाभारते सः सुरलोकात् अमृतं चोरणकारणेन अमृतहरणः कथितोऽस्ति। एतेन कार्येण सः स्वमातरं दासीभावात् मुक्तं कारितम्। भगवान् विष्णुः गरुडात् स्ववाहनं भवितुं वरम् अयाचत। गरुडः तत् स्वीकृतवान् विष्णोश्च वाहनं जातः। श्रीहरिः तं स्वध्वजायां स्थापयित्वा तस्येच्छां पूर्णं कृतवान्। सः च गरुडध्वजः कथितः आरभत्। पक्षस्य स्वर्णिमकारणेन सः सुपर्णः उक्तः।पुराणकाले गरुडस्य एते रूपे नितरां प्रथिते जाते। सर्वेषु पुराणेषु एतयोः प्रसङ्गः प्राप्यते। यदा गरुडः श्रीहरिं समया वसति तदा तस्य एकहस्तः गरुडस्य स्कन्धे स्थापितः वर्तते। यदा सः तस्य वाहनरूपेण भवति तदा तस्य पक्षौ प्रथितौ भवतः। तस्य पृष्ठे श्रीकृष्णः सीदति प्रथितयोः पक्षयोश्च एतस्य चरणौ स्थितौ वर्तते। गरुडः विष्णोः प्रत्येकं रूपस्य सहाय्यं करोति। सः महान् बलवान् पराक्रमशाली चास्ति। तस्य वामपक्षः स्वर्णिमः अति शक्तिशाली चास्ति। कालियदमनकाले काा-लियनागे तेनैव वामपक्षेण सः प्रहरति......! पक्षेण सध्येन हिरण्यरोचिणः जघान् कद्रुसुत-मुग्रविक्रमः।।सर्पः नागश्च गरुडात् अति बिभ्यतः। सर्पः एव गरुडस्य आहारोऽस्ति। पातालवासिनः सर्पाः सदैव गरुडात् सशङ्किताः वर्तन्ते। अयं श्रीकृष्णेन स्मृते कृते तत्क्षणे हि उपस्थितः भवति। श्रीकृष्णेन सह सत्यभामा अपि गरुडे उपविश्य भ्रमति। विष्णुधर्मोत्तरे गरुडः हरितः उक्तोऽस्ति। कौशिकवत् तस्य नासिका वर्तते। तस्य नेत्रे वर्तुले चतुर्भुजाश्च भवेयुः। गृध्रस्य जङ्घा इव तस्य जङ्घा तथा चरणौ भवन्ति। सुन्दरौ पक्षौ वर्तेते। गरुडस्य चतुर्भुजाः भवन्ति। द्वयोः भुजयोः छत्रं पूर्णकुम्भश्च विद्येते। शेषहस्तौ अञ्जलिमुद्रायां स्थितौ वर्तेते - ताक्ष्र्यमारकतप्रख्यः कौशिकाकारनासिकः चतुर्भुजस्तु कर्त्तव्यो वृत्तनेत्रमुखस्तथा। गृध्रोरुजानुचरणः पक्षद्वयविभूषणः। प्रभासंस्थानसौवर्णः कलापेन विवर्जितः। छत्रं च पूर्णकुम्भं च करयेस्तस्य कारयेत्। करद्वयं तु कर्त्तव्यं तथास्य रचिताञ्जलिः। यदास्यभगवान्पृष्ठे छत्रकुम्भघरौकरौ। न कर्त्तव्यौ तु कर्त्तव्यौ देवपादधराकुभौ। अग्निपुराणे गरुडः अष्टभुजः कथितोऽस्ति। तस्य दक्षिणस्य चतुर्हस्तेषु चक्रः खड्गः मुसलः अङ्कुशः वामस्य च चतुर्हस्तेषु शङ्खः शार्ङ्गः गदा पाशः च वसन्ति। मानसारग्रन्थः एतं शुकाकारनासिकः अष्टसर्पैः विभूषितः भीषणलोचनः करण्डमुकुटयुक्तः तप्तकनकेन समः कथयति मध्यकालस्य आरम्भे गरुडस्य प्रतिमाः शुकेन समाः निर्मिताः। कालेऽस्मिन् एतस्य अङ्गान् प्रति अधिकं ध्यानं प्रदत्तम्। साँच्याः प्राचीदिशः द्वारस्य अन्तं प्रति एकः मूर्तिफलकोऽस्ति। अस्यां सर्वे पशवः बुद्धं सम्मानं प्रदर्शयन्ति। बुद्धः बोधिद्रुमस्याधः वज्रासनमुद्रायाम् आसीनोऽस्ति। एतेषु सिंहः कुक्कुरः खगाः आदयोऽपि सन्ति। दक्षिणे कोणे दीर्घशुकाकार एकः खगोऽस्ति। यः कर्णयोः कुण्डलं धृतवान् अस्ति। लोमशकेशाः सन्ति। अयमाकारः पञ्चफणिनः सर्पस्य पार्श्वे निर्मितोऽस्ति। ग्रुण्डबेलमहोदयेन उक्तमस्ति यत् 'गरुडस्य भारतीयशुकरूपस्य पश्चिम्यैशियायाः ग्रिकिनखगस्य रूपयोः मिश्रितं रूपं प्रदर्शितमस्ति। अत एव अस्य नूतनं रूपं जातम्।' गान्धारकलायाः अन्तर्गतं गरुडं एकस्य दीर्घगृध्रस्य रूपेण चित्रितं कृतमस्ति। तं सर्वाभूषणानि परिधापितानि सन्ति। परन्तु पक्षौ अति प्राकृतिकौ निर्मितौ। यदा कदा गगने उड्डीयमान अपि प्रदर्श्यते। स्वकीयेन बलिष्ठचञ्चुना अयमेकं सर्पं सर्पिणीं च गृह्णन् वर्तते। महाभारते सुप्रतीकः। अयं नितरां सुपर्ण-पक्षिणः रूपेण उक्तोऽस्ति एषश्च गरुडध्वजरूपं प्राप्तवान्। स्मिथमहोदस्य विचारोऽस्ति यत् गरुडः रोमनगृध्रशत् स्वाकृतिं लब्धवान्। परन्तु ऐलनमहोदयः रूपमिदं स्वाभाविकं कथयति रूपमेतच्च भारतवर्षस्य सर्वसाधारणं रूपं मन्यते। चन्द्रगुप्तद्वितीयस्य रजतस्य नाणकेषु गरुडः पक्षौ प्रसारितवान् खगवत् अग्रं प्रति आस्यं कृत्वा स्थितोऽस्ति। परन्तु एतस्यैव केषुचित् ताम्रस्य नाणकेषु द्विभुजः मनुष्याकारः निर्मितोऽस्ति। करयोः सः मणिबन्धाभूषणं धृतोऽस्ति। एकं तृतीयप्रकारेण अस्य अन्यच्चित्रणं लभते। अस्मिन् एतस्य हस्तौ न स्तः। मुखेन सर्पः गृहीतोऽस्ति। एतत् पुराणेषु कथितं तस्य पन्नागिरिरूपंपन्नागाशनरूपं च प्रति सङ्केतं करोति। मानवस्य इव मुखी गरुडमूर्तिः कुमारगुप्तस्य टेरेकोटायाः मुद्रासु निर्मितास्ति। इयं नालन्दायाः प्राप्तासीत्।

# शिवसपर्यालोकः



जिष्णुना जिष्णुना लोकान् विष्णुना प्रभविष्णुना ।
ब्रह्मणा ब्रह्मणाद्येन स्तुताय स्वामिने नमः ?

ॐ नमः शिवाय । तत्र सकलकुशलकरं शिवनाम एव । शैवदर्शनमपि बहुपुरातनं निखिलेस्मिन् भारतमण्डले नूनमतीव प्राचीनं धार्मिक-संप्रदायेषु स्वकीयं महत्वपूर्णस्थानं भजते । ऋग्वेदे रुद्ररूपेण शिवस्य स्वरूपप्रतिपादकाः सन्ति बहवो मन्त्रा इति नापरोक्षं प्रेक्षावताम् । कथ्यते द्राविडदेशे एव शिवस्याविर्भावो जातः । द्राविडदेश एव शिवस्य शिवपूजायाश्च जन्मभूमिर्विराजतेतराम् । ये महेश्वरनियुक्ते श्रौते स्मार्ते च कर्मणि प्रवर्तन्ते ते मुच्यन्ते । ये तु न प्रवर्तन्ते ते संसरन्ति । तथाहि ऐतरेयोपनिषदि- पन्था एतत्कर्म तस्मान्न प्रमाद्येत नातीयात् न ह्यत्यायंस्ते । इति । अग्नि-समुपासकानां वैदिकानां धर्मे लिंगात्मकरूपेणोपास्यस्य शिवस्याविर्भावः कथं समजनि इत्यस्मिन् विषये कानपि विचारान् विपश्चितां मनस्तोषाय स्तोकमुदीरयामि । वैदिकसंहितासु शिव एव रुद्रनाम्ना व्यपदिश्यते । अथर्ववेदे (11/2/9) शिव एव भव-शर्व-पशुपति- भूतपत्यादिभिर्नामभिः समुदीर्यते स्तुतिप्रसंगे । पशुपतिशब्दो न गवादीनां चतुष्पादपशूनां कृते प्रयुक्तः। रुद्रशब्दविषये पोषकाः मन्त्राः ब्राह्मणवाक्यानि चात्र समुपन्यस्यन्ते । ऋग्वेदे- त्वमग्ने रुद्रो असुरो महोदिवः(2/1/6) अथर्वे- 'यो अग्नौ रुद्रो य अप्स्वन्तर्य औषधीर्विरुध आविवेश । य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये (7/87/1) शतपथेपि-'अग्निर्वै स देवः तस्यैतानि नामानि । शर्व इति प्राच्या आचक्ष्यते । भव इति यथा वाहीकाः। पशूनां पती रुद्रोग्निरिति तानस्याशान्तान्येवेतराणि नामानि । अग्निरित्येव शान्ततमम्।'( ब्रा0-1/7/3/8) इति । एताभिः रुद्रस्य अग्निरूपत्वं सिद्धम् । साम्प्रतिकी शिवोपासनापद्धतिरपि सिद्धान्तमिमं सुतरां द्रढयति । जलधारीति नाम्ना ख्यातस्य स्थलस्य मध्ये विराजते ऊर्ध्वमूलं शिवलिंगम् । अभिषेकप्रियः शम्भुः इति वचनात् जलस्याभिषेकेणैव शम्भुः परमां प्रीतिमावहति । भस्मनो धारणं शैवानां मुख्यं कर्तव्यम् । इत्ययं सार्वकालिकः सार्वभौमश्चोपासनापन्था शिवस्याग्निपूजया नितान्तं साम्यं भजते । ऊर्ध्वमूलं शिवलिंगं वेदिमध्ये प्रोदीप्तवह्निः । इत्यस्मिन् विषये शिवलिंगस्य कृते ज्योतिर्लिंगस्य प्रयोगो जातः । रुद्र एव अन्तरिक्षस्थितवह्निरूपाया विद्युतोध्यक्षरूपेण वेदेषु मुहुर्मुहुश्चिन्त्यते । तथाहि आथर्वणे- 'मा नो रुद्र तवमना मा विषेण मानः सं स्रा दिव्येनाग्निना । अन्यत्रास्मद् विद्युतं पातयैताम् ? (11/2/26) इति । अत्र अग्ने रूपद्वयम् प्रसिद्धम् घोराऽघोरातनुभेदात् । भयावहं यत् घोरं तत्तु भीषणानां संहारकरम् । अघोररूपं सुखसौख्यविवर्धकं प्राणिनां सर्वदा कल्याणकरम् । संहारकोपि रुद्रो जगतः सृष्टिकर्मण्येव प्रवर्तते । यदुक्तं महकविना कालिदासेन-'कृष्यां दहन्नपि खलु क्षितिभिन्धनेद्धो । बीजप्ररोह-जननीं ज्वलनः करोति' ? (रघु09/80) सृष्टि-प्रलययोः परस्परं सापेक्षत्वात् । करुणया हि भगवतः सदाशिवस्य सृष्टिः । शं सुखं तस्मिन् भवतीति शम्भुः स्वयमानन्दरूपः । विज्ञानमनन्दं ब्रह्मेत्यादि श्रुतेः आनन्दमजमव्यक्तं निष्कलं तदुदाहृतमित्यादीश्वर्गीतास्मृतेश्च तदवगमः । ननु शिवस्य आनन्दमयत्वे प्रीत्यात्मक-सत्त्वगुणरूपत्वेन सगुणत्वात् परिणामादिदोषप्रसंगः ? यच्चोक्तं सांख्ये- 'प्रीत्यप्रीतिविषदात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनप्रवृत्तयश्च गुणाः' ?( सां0का-12) इति मैवम् । प्रीत्यानन्दशब्दयोर्भिन्नत्वात् । तथाहि तत्त्वप्रकाशकारेण-विषयेन्द्रिय-सम्प्रयोगजन्यं यत्सुखं तत्तु प्रीतिशब्देनोच्यते । सततैकतानताप्रवाहरूपं नित्यं निरतिश्रयात्मसुखमानन्दशब्दवाच्यमिति नोक्तदोषावकाशः । अन्ये तु सत्त्वगुणे निर्मले पुण्यहेतुना विषयेन्द्रियसंप्रयोगेन परिणते नित्यसुखमेव प्रीतिशब्देनोपदिष्टम् । प्रादौ शैवदर्शनं द्वैताऽद्वैतभेदेन द्विविधम् । अभिनवगुप्तपादाऽद्वैतशैवमतस्य प्रवर्तकाः । इतरे द्वैतवादमाश्रितं प्रचलन्ति । द्वैताश्रितधर्मरूपेण शैवमतस्य प्रचारः प्रसारश्च न केवलं द्वादशज्योतिर्लिंगस्थलेषु सोमनाथ-महाकाल-विश्वनाथ-मल्लिकार्जुन-औंकारेश्वर-केदारेश्वर-भीमशंकर-त्र्यम्बकेश्वर-वैद्यनाथ-नागेश्वर-रामेश्वर-घृष्णेश्वरेषु क्रियते अपितु प्रतिग्रामं प्रतिनगरं प्रतिशिवमन्दिरेषु प्रमाणयतितराम् । दशविधानि शैवदर्शनानि । यद्यपि बहूनि शैवमतानि । तेषु कालमुख-कापालिक-कारुणिकादीनि तद्विषयकसाहित्यस्य विलुप्तत्वात् नाममात्रज्ञातानि भवन्ति । दशेषु द्वैतवादधुरन्धरा पाशुपता शैवाः द्विप्रकारकाः । अनयोर्द्वितीयः सिद्धान्तशैवः भिन्नः दक्षिणभारतीयः । द्वैताऽद्वैतपरको नकुलीशपाशुपतः । श्रीकंठसमर्थकः विशिष्टाद्वैती।श्रीपतिस्थापित शुद्धद्वैताऽद्वैत-सेश्वराऽद्वैत-शिवाऽद्वैत-विशेषाऽद्वैत –रसेश्वरभेदेन वीरशैवाः प्रसिद्धाः । चत्वारि अद्वैतशैवदर्शनानि । तेषु पाणिनिगुरु-नन्दिकेश्वरप्रतिपादितमेकम् । काश्मीरिकैः प्रतिपादितानि प्रत्यभिज्ञा-क्रम-कुलेति नामभिः प्रसिद्धानि च त्रीणि । गौतम-

कणादौ शैवौ आस्ताम् । वादरायणेन



पाशुपतमतं समालोचितम्। प्रधानं चात्र उपादानकारणम् । महत् आरभ्य पृथिव्यन्ताः त्रयोविंशति-पदार्थाः कार्यान्तर्गताः । पश्चात्कापिले मुख्यः प्रकृतिपदार्थः स्वीकृतः। महदादीनि त्रयोविंशतिः कार्याणि इति विचारधारा पाशुपतप्रभावकृता वेति संभाव्यते । पातञ्जलयोगदर्शनं तु शैवप्रतिपादितस्य षडंगयोगस्य अंगद्वयमन्यत् द्वयं यम-नियमं तत्र परिवर्धनमात्रम् । अद्वैत-शैवदर्शने शंकरस्य न विरोधः । शंकरोऽपि स्वकीये भाष्ये माया ईश्वरशक्ति इति शैवानां मौलिकसिद्धान्तं स्वीकरोति । तत्रादौ परमेश्वरप्रोक्ते शिवसूत्रे पञ्चचत्वारिंशत् (45)सूत्राणि विद्यन्ते। तत्र चैतन्यमात्मा(शि0सू0-1) । शिव एव विश्वस्यात्मा । सश्चैतन्यस्वरूपः । विशालं शैवदर्शनम् । काश्मीरे हृष्टपृष्टम् । तेषु त्रिकस्य प्रभावो बलवत्तरः । शैवधर्मः प्रागैतिहासिके वेदोपनिषत्सु इतिहासेषु दृश्यते । शैवानां स्वतन्त्रसिद्धान्तेषु प्रकाशो विमर्शः, परिपूर्णता, सत्कार्यवादः,शिवशक्तितत्त्वम् ,स्वातन्त्र्यं स्पन्दः, परमेश्वरतादिविषयाः समुपवर्णिताः । माया- काल- पुरुष-प्रकृति-गुण –नाथतत्त्व-अवस्थात्रय-अन्तःकरण-बाह्यकरण-प्रमेयतत्त्व-लोकसृष्टि-कलापञ्चक-अण्डचतुष्टय-मलस्वरूप-मलत्रय-अकलप्रमाता-मन्त्रमहेश्वर-मन्त्रविद्येश्वर-विज्ञानाकल-प्रलयाकल-सकल-लीला विलास-अज्ञान-ज्ञान-जीवन्मुक्ति- मुक्तशिव- देहस्थशिव-विदेहमुक्ति- शक्तिपात- सौषुप्त-मुक्ति-मुक्त्याभासादीनां विषयास्तत्र परिशीलनीयाः। धर्मपालने बाह्यपूजा-साधना-भक्ति-चर्या-आचार-समावेश-अनुपाय-शाम्भवोपाय-मातृका-मालिनीत्यादिशाक्तोपायगम्यज्ञानयोगा आणवोपाय-क्रियायोग-ध्यानयोग-उच्चारयोग-करणयोग-ध्वनियोग-दीक्षादीनि विषयाश्च उक्ताः। शाक्तदृष्टि-पञ्चशक्ति-विद्या-महामाया-द्वादश कालीशक्तयः सनातन सिद्धान्त रूपेण संकलितः। एतत्सर्वं शैवदर्शने सुस्पष्टम्। तत्र तत्र शैवदर्शनं काश्मीरे, कान्यकुब्जे, मध्यप्रदेशे च द्वैतशैवसिद्धान्तः प्रचारितः। शैव-दर्शनेषु द्वैतशैवसिद्धान्त-वैशेषिकयोः , सिद्धान्तशैव-सांख्ययोः,सिद्धान्त-शैवाद्वैतयोः , सिद्धान्तशैव-वैयाकरणयोः, द्वैतपाशुपत-सिद्धान्तद्वैतयोश्च बहुधा भेदः प्रतीयते । सर्वत्र पति-पाश-पशु इति त्रीणि तत्त्वानि मुख्यानि । सिद्धान्तशैवे षड् त्रिंशत्मतानि । पतिः शिवः । द्विविधा सृष्टिः । मल-माया-कर्म-निरोध-विन्दवो पञ्चपाशाः। पशुस्तृतीयो जीवात्मा त्रिप्रकारकः। पाशान्ते शिवताश्रुते इति मृगेन्द्रे-

**चैतन्यं दृक् क्रियारूपं तदस्यात्मनि सर्वदा ।**
**सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम् ?** (स0द0सं0-20)

अथादौ शिवलिंग-पूजन-महिमा भविष्ये- लिंगे देवो महादेवः सर्वदेवनमस्कृतः। अनुग्रहाय लोकानां तस्मान्नित्यं प्रपूजयेत्? इति । अपिच तत्र- यस्तु पूजयते नित्यं शिवं त्रिभुवनेश्वरम्। सः स्वर्गराज्यमोक्षाणां क्षिप्रं भवति भाजनम्? इति। लिंगार्चनात्किंचिदधिकं पुण्यं नास्ति। लिंगपूजनेन तु सर्वदेवार्चनं भवति। यदुक्तं लिंगपुराणे- लिंगेतु पूजिते सर्वमर्चितं स्याच्चराचरम्। तस्मात् सदार्चनं कार्यं लिंगस्य सुमहात्मनः? इति। शिवपूजकस्य शिवलोकप्राप्तिर्भवति। सः शिवसायुज्यतां प्राप्नोति। तथाहि लिंगे- अनेकजन्मसाहस्रं भ्राम्यमाणस्तु योनिषु। कः समाप्नोति वैमुक्तिं लिंगार्चनमृतेनरः सर्वेन्द्रियप्रसक्तोऽपि युक्तो वा सर्वपातकैः। सः प्रयाति शिवं देवि लिंगं योऽचर्यतीहमे? इदं सर्वं शिवपूजायाः वैशिष्ट्यं पुराणसमर्थितम् । शिवपूजनं विना भोजनग्रहणमपिनिषिद्धम्। उक्तं च भविष्ये- वरंप्राणपरित्यागः शिरसोवापिकर्त्तनम्। नत्वसम्पूज्य भुञ्जीत भगवन्तं त्रिलोचनम्? सर्वदैवनमस्कृतं शिवलिंगं यो द्वेष्टिः सो नूनं नर्कगामी भवति। तस्य कृते भुक्तिमुक्ती न स्तः। शिवपुराणे शिवपूजनस्य महत्फलं समुपदिष्टम्। तत्तु शतगोदानादपिश्रेष्ठतरम्। हविर्यज्ञादपिश्रेष्ठतममिति। तथा चोक्तं- यत्फलं पाकयज्ञेषु हविर्यज्ञेषु यत्फलम्। एकाह्नातदवाप्नोति शिवलिंगार्चने रतः? अपिच- गवां शतसहस्रस्य सम्यग् दत्तस्य यत्फलम्। दशाहात्तदवाप्नोति शिवलिंगार्चने रतः इति। लिंगशब्दार्थ उच्यते । -आकाशंलिंगमित्याहुः पृथिवीतस्य पीठिका। आलयः सर्वभूतानां लयनात्लिंगमुच्यते? स्पष्टः। शास्त्रान्तरे बहुविधानां लिंगानां वर्णनं विद्यते । अपि च कस्य लिंगस्य कः पूजकः इत्यस्मिन् विषये ब्रह्मोक्तिः देवीपुराणे- वार्क्षंवित्तप्रदं लिंगं स्फाटिकं सर्वकामदम्। नार्मदं गिरिजं श्रेष्ठमन्यद्वापि हि लिंगवत् पार्थिवलिंगस्य वाणलिंगस्य च महिमा सर्वतन्त्रेषु प्रसिद्धा। यदुक्तं भविष्ये- वाणलिंगानि राजेन्द्र ख्यातानि भुवनत्रये। न प्रतिष्ठा न संस्कारस्तेषामावाहनं तथा? अन्यच्च- यः कृत्वा पार्थिवं लिंगमचर्येत् शुभवेदिकम्। इहेव धनवान् श्रीमान् सोऽन्तेरुद्रोऽभिजायते? ब्रह्मणः शैलजं, हरेः नीलमणिमयं, इन्द्रस्य मणिमयं, विश्वदेवानां रोप्यमयं, वायोः पैत्तलं, वसूनां कांस्यजं, अश्विनिकुमारयोः हिरणमयं, वरुणस्य स्फाटिकं, वह्नेः रत्नमयं, सोमस्य मौक्तिकं, सूर्यस्य इन्द्रनीलजं, दानवानामायसं, पिशाचानां त्रपुजं, योगिनां सीसजं, गुह्यकानां ताम्रजं, मात?णां वज्रलौहं, ग्रहनक्षत्राणां तु वैडूर्य-लिंगानि उपासनार्थं स्थिरीकृतानि। अन्यत्र शालग्रामशिलायां शिवार्चनमपि बहुपुण्यप्रदमुक्तम्। यदुक्तं पाद्मे- शालग्रामशिलालिंगे यः करोति ममार्चनम्। तेनार्चितः कार्त्तिकेय युगानामेकसप्ततिः? शिवकैवल्यभोजने यदि वा दोषादोषो विद्यते किन्तु शालग्रामशिलायां शिवार्चनेन न कश्चिद् दोषो विद्यते। यदुक्तं- अग्राह्यं मम नैवेद्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलालिंगे सर्वं याति पवित्रताम् इति। संप्रति शिवस्नानाख्यम भिषेक प्रयोगा उच्यन्ते। आदौ ब्राह्मं स्नानम्। तत्तु कपिलापञ्चगव्यं कुशवारियुक्तम्। तत्फलं ब्रह्मपुराणे- एकाहमपि यो लिंगे ब्राह्मं स्नानं समाचरेत्। विधूय सर्वपापानि रुद्रलोके महीयते। कपिलापंचगव्येन दधिक्षीरघृतेन च। स्नानं शतगुणं प्रोक्तमितरेभ्यो न संशयः? कृष्णाष्टम्यां घृतस्नानं विंशतिकुलोद्धरणम्। क्षीरस्नानस्य महिमा अतीव श्रेष्ठा। तथाहि- अयुतं यो गवां दद्याद् दोग्ध्रीणां वेदपारगे। वस्त्रहेमादियुक्तानां क्षीरस्नानस्य तत्फलम्? दधिस्नानस्य फलं- दध्नातु स्नापयेल्लिंगं सकृद् भक्त्या तु यो नरः। सर्वपापविनिर्मुक्तः शिवलोके महीयत मधुस्नानस्य फलम्- मधुना स्नापयित्वा तु सकृद् भक्त्या तु यो नरः। पापकञ्चुकमुत्सृज्य वह्निलोके महीयते शर्करया विद्याधरलोकप्राप्तिः। तिलतैलेन शैवपदप्राप्तिः। कर्पूरागरुतोयेन शिवसायुज्यतालाभः। कुंकुमजलेन श्रियोलाभः। फलतोयेन ब्रह्मज्ञो भवति। सहस्राकुम्भाभिषेकेन चिरंजीविता। वस्त्रपूततोयेन तु सर्वकामाप्तिः। कुशोदकेन ब्रह्मलोकाप्तिः। चन्दनोदकेन गन्धर्वलोकलाभः। पुष्पोदकेन सूर्यलोकाप्तिः। सुवर्णतोयेन कुवेरलोकप्राप्तिः। रत्नोदकेन इन्द्रलोकेवासः। सितोष्णोदकेन च प्रमोदता जायतेति भविष्यपुराणात् ज्ञायते। एतदतिरिक्तं पाटली-उत्पल-पद्म-करवीरादीनि पत्राणि योजयित्वा सुरभिजलेन यः शिवाभिषेकं करोति सः साक्षाद् शिवलोकं गच्छति। शर्करायुक्तहीमजलेन धारोष्णपयसा च शिवं संस्नाप्य चान्ते घृताभिषेकेन यः शिवं सन्तोषयति सः सहस्राश्वमेधयज्ञफलं प्राप्नोति । मृत्तिकाकुम्भेन ताम्रकुम्भेन गवयशृंगेण गोमुखिना वा पात्रेण शिवस्याभिषेकः श्रूयते। एतेषां पात्राणां विनियोगेनोत्तरत्तरफलानि जायन्ते। यच्चोक्तं- मृत्कुम्भात्ताम्रजैः कुम्भैः स्नानं शतगुणोत्तरम्। रोपैर्लक्षोत्तरं ज्ञेयं हेमैः कोटिगुणोत्तरम् लिंगस्य दर्शनात्पुण्यं दर्शनात्स्पर्शनं वरम्। स्पर्शनाच्चार्चनं पुण्यं घृतस्नानमतःपरम् दशापराधांस्तोयेन क्षीरेण च शतं लभेत्। सहस्रं क्षमते दध्ना घृतेनाप्ययुतं लभेत् इति। स्कान्धेऽपि क्षीरस्नानस्य महती प्रशंसा क्रियते। तथाहि- सम्बत्सरंतु यः कुर्यात्क्षीरेण स्नपनं शुचिः। गाणपत्यं च लभते वल्लभत्वं च नित्यशः अन्यत्रापि- जलेन वृष्टिमाप्नोति व्याधिशान्त्यैः कुशोदकैः। दध्ना च पशुकामाय श्रिया इक्षुरसेन च मध्वाज्येन धनार्थीस्यान्मुमुक्षुस्तीर्थवारिणा। पुत्रार्थी पुत्रमाप्नोति पयसा चाभिषेचनात् वन्ध्या वा काकवन्ध्या वा मृतवत्सा च याऽङ्गना। सद्यः पुत्रमवाप्नोति पयसा चाभिषेचनात्। कामनाभेदेन अन्येप्रयोगा अपि विद्यन्ते। विस्तरभयात् नोच्यतेऽत्र । हर हर महादेव ।

**डः नन्दप्रदीप्तकुमारः**

रम्या रामायणी कथा




**लोकाभिरामं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथम।**
**कारुण्यरूपं करुणाकरं तं श्रीरामचन्द्रं शरणं प्रपद्ये?**

अथ श्रीरामो वानरराजसुग्रीवं मित्रधर्मविषये वदन् कथयति, हे सुग्रीव! मित्रधर्मस्य परिपालनं कर्तारो जनाः संसारे धन्याः सन्ति। ये स्वभावतः सदा परमार्थपथगन्तारो वर्तन्ते, ते सदा सुखदुःखयोश्च समा भवन्ति। मित्रस्य श्रेष्ठधर्मोऽस्ति, सः स्वमित्रं कुमार्गाद् दूरीकृत्वा सन्मार्गं प्रति नयेदिति मन्ये। लोके तस्य गुणान्प्रकटीकरोतु तथा तदवगुणान् विलोप्य सदा तस्य कल्याणार्थं कर्तुं कारयितुं च प्रयत्नं कर्तव्यम्।

मित्राय धनादीन् दत्वा नीत्वा च हृदये कदापि संदेहं न कुर्यात्, अपितु यथाशक्तिः तस्यसहाय्यं कर्तव्यम्। विपत्तिकाले मित्रेण सह विशेषरूपेण स्नेहमभिव्यक्तं कृत्वा तद्दुःखं दूरीकर्तुं सदुपायं कुर्यादिति मित्रधर्मं श्रुतिः कथयति। यः समक्षं मधुरं वदति, किन्तु पृष्ठे निन्दयति तथा स्वमनसि कुटिलतां धारयति तथा यस्य गतिर्मतिश्चाहिसमोऽस्ति, तर्हि एतादृशानि कुमित्राणि शीघ्रमेव परित्यागं कर्तव्यम्।

हे मित्र! मूढसेवकः,कृपणनृपः,पथभ्रष्टस्त्री, धूर्तमित्रम् च एते चत्वारः शुलतुल्यकष्टं ददति। हे मित्र! अधुना भवान् मद्बलाश्रितोऽस्ति, अत एव स्वचिन्तां त्यक्त्वा सुखी भवेत्। भवत्कल्याणं कर्तुमहं सर्वप्रकारेण मानापमानं सोढुं शक्ष्यामिति मे वचनं वर्तते। शम्।

**-क्रमशः**



आचार्य अरविंद पांडेय

## 'पुरा नवं भवति इति पुराणम्।'

उपोद्घातः, मुक्तेः संज्ञा, विप्रपूजामाध्यमेन मुक्तिः, दर्शनमाध्यमेन मुक्तिः, अर्चनमाध्यमेन मुक्तिः, क्रियायोगमाध्यमेन मुक्तिः, अकपटभक्तिमाध्यमेन मुक्तिः, उपदेशपालनमाध्यमेन मुक्तिः, श्रवणमाध्यमेन मुक्तिः, पठनमाध्यमेन मुक्तिः, विष्णुसेवामाध्यमेन मुक्तिः, सत्सङ्गमाध्यमेन मुक्तिः, आत्म समर्पण माध्यमेन मुक्तिः, व्रतपालनमाध्यमेन मुक्तिः, गङ्गातीर्थसेवनेन मुक्तिः, उपसंहार इत्यादयः। वासुदेव परावेदा वासुदेव परासखाः। वासुदेव परायोगा वासुदेव पराः क्रिया। वासुदेव परं ज्ञानं वासुदेव परं तपः। वासयदेव परो धर्मो वासुदेव परा गतिः। पौराणिक साहित्यम् सर्वेषाम् अचिन्त्यतत्त्वानां नवरूपायनं भवति। अस्मिन् साहित्ये धर्मदर्शन समाजार्थ नीति राजनीति विज्ञानेतिहास भूगोलादयः विषयाः नवरूपेण सन्ति। उच्यते - 'पुरा नवं भवति इति पुराणम्।' अष्टादश उपपुराणेषु कल्किपुराणम् एकतमम्। पुराणेऽस्मिन् जीवस्य मोक्षलाभस्य विषयः सुष्ठु रूपेण वर्णितः। अन्यत् पुराणवत् पुराणमिदं जीवस्य मुक्तिं स्वीकरोति। मूलतः जीवः अविद्यावशात् पुनः-पुनः जन्ममरणचक्रम् आगच्छति गच्छति च। संसारपाशेन आच्छाद्य बहुविधं दुःखं सहते। केवलं कल्किपुराणस्य मार्गेण जीवः गमनकृते सति अपि तद्दुःखम् अनायासेन निराकृतं भवति। तस्मात् अस्मिन् पुराणे मोक्षलाभस्य उपायरूपेण विप्रपूजा, भगवतः कल्केः अर्चनम्, पादवन्दनम्, स्तुतिकीर्तनम्, तीर्थस्नानम्, दानम्, व्रतपालनम्, साधुसङ्गलाभादयः विषयाः उल्लिखिताः भवन्ति। भवार्णवम् अतिक्रमनार्थं एतानि मार्गाणि अपरिहार्याणि। अस्मिन् विषयसन्दर्भे स्वचिन्तनं मया उपस्थाप्यते। मुक्तेः संज्ञा मुक्ति शब्दस्य पर्याय वाचक शब्दः भवति मोक्षः। यदा जीवः भोगासक्तिसम्पन्नं जड़देहं त्यक्तवा आत्मस्वरूपं जानाति तदा तस्य मुक्तिर्भवति। उच्यते भागवतपुराणे- 'मुक्तिर्हित्वा अन्यथा रूपं स्वरूपेण व्यवस्थितिः।' अपि च निरालम्व-उपनषिदि कथ्यते - यदा वस्तुविचारेण नित्यं वस्तुनिर्णितं भवति तदा अनित्यसंसारस्य समुदायसंकल्पस्य विनाशो भवति।

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
**-एसो. प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**

**वैधानिक सूचनाः** आह्निक वार्ता पत्रम् से सम्बन्धित समस्त विवाद के निपटारे का क्षेत्र इलाहाबाद (प्रयागराज) न्यायालय होगा।